तालप्रयोगैः प्रतिबद्धवाद्य-
वीणाधरा नारद भैरवीयम्

तथा च नादपुराणे—

ाविमलकमलकान्ति-स्वर्णताडङ्कवक्त्रा।
मुखजनितविकाशा पल्लवक्ता मृगाक्षी।
पीतवसनचारुभूषणा रत्नहैम्नी
सुरगणरमणीया भैरवी भैरवस्त्री॥ इति ध्यानम्।
धैवतांश-ग्रहन्यासं धैवतादिकमूर्च्छना।
सम्पूर्णा भैरवी ज्ञेया प्रातःकाले प्रगीयते॥
धपमगमगरेगरेसाधनिसासानिमारेगमग-
रेसासारेगमध गमधधनिसासानिधपमप-
धपमगमनिधनिधपमगसारेगम॥

इति हनुमन्मते।

अथ भरतमते—

मध्यमांश-ग्रहन्यासं मध्यमादिकमूर्च्छना।
सम्पूर्णा भैरवी ज्ञेया मपधनिसरेगस्वरा॥
मपधनिसासारेगमपमधनिसागरेमा
निधपमगरेसारेगधनिसानिसागमनिधगमगरेसा-
गगरेमानिमाधधनिसारेगमपमगरेसामगरेसा॥
ममगधधनिसानिसाधनिसारेगमपमगरेसामगरेसा॥

अथ गुर्ज्जरी ( संगीतदर्पणे २:८० )—

श्यामा सुकेशी मलयद्रुमाणां
मृदुल्लसत्पल्लवतल्पमध्ये।
श्रुतिस्वराणां दधती विभागं
तन्विमुखा दक्षिणगुर्ज्जरीयम्॥ इति ध्यानम्।
धैवतांश-ग्रहन्यासं सम्पूर्णा गुर्ज्जरी मता।
सप्तमी मूर्च्छना तस्या बहुल्या सह मिश्रिता॥
रेगमपधनिसारे रेगमधसारे सानिधपमगरे।
रामक्री-टोड़ी-संयुक्ता वराटी मिश्रिता पुनः।
गुर्ज्जरी जायते विद्वन्! आद्ययामे प्रगीयते॥
धनिनिधनिनिधरेधगनिधमगगरेसानिरेरेधनि-
रेगमधममगसारेगनिध।

अथ टोड़ी * ( संगीतदर्पणे २:५३ )—

तुषारकुन्दोज्ज्वलदेहयष्टिः
काश्मीरकर्पूरविलिप्तदेहा।
विनोदयन्ती हरिणं वनान्ते
वीणाधरा राजति टोड़िकेयं॥ इति ध्यानम्।
गान्धारांश-ग्रहन्यासः क्वचित् मध्यम ईरितः।
सम्पूर्णा टोड़िका ज्ञेया आद्ययामे प्रगीयते॥
ग-म-प-ध-नि-सा। अथवा
धैवतांश-ग्रहन्यासा सम्पूर्णा टोड़िका मता।
दिवस-प्रथमयामे गीयते विबुधैर्जनैः॥
धनिसारेगमपपधनिसानिधपमगरेसा।
धसामपधसारेगममगरेसानिधपमगरेसा॥

अथ रामकली † ( संगीतदर्पणे २:६० )—

हेमप्रभा भासुरभूषणा च
नीलं निचोलं वपुषा वहन्ती।
कान्ते समीपे कमनीयकण्ठा
मानोन्नता रामकली † मतेयम्॥ इति ध्यानम्।
धैवतांश-ग्रहन्यासा पूर्णा रामकली मता।
प्रथमा मूर्च्छना ज्ञेया रसे कारुण्यमुच्यते॥
भैरवी गुर्ज्जरी टोड़ीतुसत्पन्ना टोड़िका मता।
प्रातःकाले प्रगीयते भैरवस्य च वल्लभा॥
धगसारेमगधपमगमगरेसाधसाममसा-
पपमसासारेरेसासा पपसासानिरेसा-
धनिधपमपधपगमगरेसा।

अथ वराटी ( संगीतदर्पणे २:५० )—

विनोदयन्ती दयितं सुकेशी
सुकङ्कणा चामरचालकेन।
कर्णे दधाना सुरवृक्षपुष्पं
वराङ्गनेयं कथिता वराटी॥ इति ध्यानम्।

* टोड़ि इति पाठान्तरम्।
† रामकिरी इति पाठान्तरम्।

मध्यमांश-ग्रहन्यासं क्वचित्‌ऋषभ ईरित: ॥
प-वर्ज्या षाड़वप्रोक्ता दिनशेषे हि गीयते ।
मधनिसारेममधमगरेसानिधसागधनिसाधमगरेसा ॥

इति पञ्चभार्यासहितभैरवराग: ।

अथ मालकोशम् * ( संगीतदर्पणे २।५२ )—

आरक्तवर्णो धृतरक्तयष्टि:
वीर: सुवीरेषु कृतप्रवीर: ।
वीरैर्धृतो वैरिकपालमाला-
माली मतो मालवकौशिकोऽयम् ॥ इति ध्यानम्

मध्यमांशग्रहन्यासं पञ्चमवर्जितस्वरम् ।
षाड़वाजातिविज्ञेया मालकौशिकसंज्ञक: ॥
मालवाकाकड़ायुक्ता वागीश्वरी-सुमिश्रिता ।
कौशिको जायते यत्र मध्यममुख्य ईरित: ॥
ममरेमानिधगरेनिधगमामनिधनिसागगधनि-
धममधनिमागगधनिधसगधनिमामारेनिधनि
मगगरेगमगमासागमामारेनिधनिधनिमगगरे
गमगगमागमामारेनिधनिधनिमगमगमधधध
ममगमधनिधधमगरेगमधममसा ॥ इत्यस्थायी ।
धनिमासारेरेधधमगमधमधनि गगगरेमा
गधमनिधगगसानिधनिसागमधनिधधमधमम
गधनिमानिनिनिधधममगमधनिधमा
रेगमधगमगनिधनिमा ॥ इत्यन्तरा ।

अथ वागीश्वरी

वीणा-विनोदी कमलायताक्षी
सौन्दर्य्यलावण्यसुगौरगात्रा ।
कान्ते समीपे कमणीयकण्ठा
वागीश्वरी कौशिकरागिणीयम् ॥ इति ध्यानम् ।
गान्धारांश-ग्रहन्यासा पूर्णा वागीश्वरी मता ।
गमपधनिसारेगसा सम्पूर्णा हनुमन्मते ॥
गमपधनिसारेगरेसानिधपधनिसारेग ।
गरेगरेममसारेसानिधपमगरेसारेग ॥

अथ ककुभा ( संगीतदर्पणे २।५७ )—

सुपोषिताङ्गी रतिमण्डिताङ्गी
चन्द्रानना चम्पकदामयुक्ता ।
कटाक्षिणी स्यात् परमा विचित्रा
दानेन युक्ता ककुभा मनोज्ञा ॥ इति ध्यानम् ।
षड्जांश-ग्रहन्यासा पूर्णा तु ककुभा मता ।
प्रात:काले प्रगीयते करुणारससम्भवे ॥
सामारेमामारेगमगरेसापमगरेसामगरेसा ।
मपधसारेमानिरेगरेगसानिनिधधपपममगगरेसा ॥

अथ पर्यंका

स्वर्णप्रभा सुन्दरगौरगात्रा
कटाक्षिणी स्यात् परमा विचित्रा ।
सौन्दर्य्यलावण्य-कलायताक्षी
सा पर्यंका रागिणी कौशिकेयम् ॥ इति ध्यानम् ।
पञ्चमांश-ग्रहन्यासा सम्पूर्णा पर्य्यंका मता ।
शेषरात्रौ प्रगीयन्ते कारुण्ये शान्तिके स्मृता: ॥
पमगरेमाधनिमागरेसामपधमारेगरेसारेगमप ।
मपधमानिधमगमागमधनिसानिधपमगरेसा ॥

अथ सोहनी

कर्णे दधाना सुरपुष्पगन्धौ
वीणा-विनोदी कमलायताक्षी ।
प्रांशुकुमारी कमनीयमूर्त्ति:
सा शोभनी कौशिकरागिणीयम् ॥ इति ध्यानम् ।
गान्धारांशग्रहन्यासं रिपौ वर्ज्जितमौड़वम् ।
निशीथे तृतीययामे शोभनी गीयते तदा ॥
गमधनिसानिधमगसाधनिधनिसागरेसा-
मगरेसानिधमगसा ।

अथ खम्बावती * ( संगीतदर्पणे २।५४ )—

खम्बावती स्यात् सुखदा रसज्ञा
सौन्दर्य्य-लावण्य-विभूषिताङ्गी ।

* अथ मालवकौशिक: । इति मुद्रित-संगीतदर्पणधृत पाठ: ।
‡ वीरहती । इति पाठान्तरम् ।
* खाम्बावती इति वा पाठ: ।

मानप्रिया कोकिलनादतुल्या
प्रियंवदा कौशिकरागिणीयम् ॥ इति ध्यानम्।
धैवतांश-ग्रहन्यासा खम्बावती सुसंवृता।
धनिसारिगमपञ्च-रात्रयां यामद्वितीयके ॥
पर्यौ वसन्तपञ्चमस्य खम्बावती जन्मभूः।
कोकिलानादकण्ठाच मालकोशस्य वल्लभा ॥
धनिसारिगमगपधनिधपमगरिसा।
धधनिधनिसारिसानिधपमगसारिग-
मपधनिनिमासानिधपमगरिसा ॥

इति पञ्चभार्य्यासहित मालकोशः।

अथ हिन्दोलः ( संगीतदर्पणे २।५८ )—

नितम्बिनी-मन्दतरङ्गितासु
दोलासु खेलासुखमादधानः।
खर्व्वः कपोत*-द्युतिकामयुक्तो
हिन्दोल रागः कथितो मुनीन्द्रैः ॥ इति ध्यानम्।
वसन्तकौशिकयुक्तः पञ्चममिश्रितः पुनः।
हिन्दोलो जायते विद्वन् रिपौ वर्जित औड़वः।
षड़जांश-ग्रहन्यासं सगमधनीति स्वराः।
वसन्तर्त्तौ प्रगीयन्ते आद्ययामे च कीर्त्तिता ॥
सासागगसासाधधनिनिधधगगममगगमम-
सासागगमामा। मागमाधसागमधनिध-
गमधसानिधमगनिधगमग।
सागसामधसागमाममानिधमगमा। धगसानि-
मगसारिगमगमामधगमनिसानिधमगमानिध ॥

अथ वसन्ती ( संगीतदर्पणे २।७१ )—

शिखण्डिबर्हीच्चयबद्धचूड़ा
कर्णावतंसीकृतशोभनाम्नी।
इन्दीवरश्यामतनुर्विलासी*
वसन्तिका स्यादलिमण्डलश्रीः† ॥ इति ध्यानम्।

वसन्ती स्यात्तु संपूर्णा षड़्जांश-न्याससंयुता
वसन्तकाले विदुषा प्रयोगः कथ्यतेऽधुना।
सारिगमपधसानिधपमगरिसा। सासागरि-
सानिनिधपमगरिसा। रिसानिधनिसा ॥

अथ पञ्चमी

मयूरबर्हिर्दृढ़वेणीबद्ध-
पिक-शुकच्युतलताङ्कुरेण।
सौन्दर्य्यलावण्यमनङ्गमूर्त्तिः
सा पञ्चमी प्रातःसमे वदन्ति ॥ इति ध्यानम्।
ललितश्च वसन्तश्च हिन्दोलः पर्य्यसंयुता।
पञ्चमीभूतसर्वः स्यात् ऋतौ वसन्ते गीयते ॥
पञ्चमग्रहसंयुक्ताः सम्पूर्णाः पञ्चमस्वराः।
पधनिसारिगमश्च हिन्दोलवल्लभा स्मृता ॥
पपधधनिमारिगमपरिसा।
मपधसागरिसानिधपमगरिसा ॥

अथ हिन्दोलिका।

नितम्बिनी सुन्दरगौरगात्रा
वीणा दधाना सुरपुष्पगन्धी।
स्वर्णप्रभा श्रीकमलायताक्षी
हिन्दोलिकेयं कथिता मुनीन्द्रैः ॥ इति ध्यानम्।
वसन्तः पञ्चमश्चाथ ललितस्वरसंयुता।
हिन्दोली जायते प्रायः वसन्ते गीयते बुधैः ॥

अथ ललिता ( संगीतदर्पणे २।६३ )—

प्रफुल्ल*-सप्तच्छदमाल्यधारी
युवा च गौरोल्लसलोचनश्रीः†।
विनिश्वसन् दैववशात् प्रभाते
विलासवेशा ललिता प्रदिष्टा‡ ॥ इति ध्यानम्।
निषादांशग्रहन्यासं क्वचित् मध्यम ईरितः ॥
सम्पूर्णा ललिता प्रोक्ता हेमन्तर्त्तौ प्रगीयते ॥

---

'कपोल' इति पाठान्तरं।
सुचिता। † मञ्जुलश्रीः' इति वा पाठः।

* प्रोत्फुल्ल इति वा पाठः।
† गौरोऽब्जदलायताक्षः। इति मुद्रित-संगीतदर्पणधृतपाठः।
‡ यस्याः पतिः सा ललिता प्रदिष्टा ॥ इति वा।

निरेसगमगगपपमगगमपगरेसा ।
गमपनिसारेगरेसानिपमगरेसा ॥
हिन्दोलपञ्चममिश्र-वसन्तस्वरसंयुता ।
ललिता जायते विद्वन् प्रात:काले प्रगीयते ॥

अथ मालवश्री ( संगीतदर्पणे २।७३ )—

रक्तोत्पलं हस्ततले दधाना
विभावयन्ती तनुदेहवल्ली ।
रसालवृक्षस्य तले निषण्णा
स्तोकस्मिता सा किल मालवश्री: ॥ इति ध्यानम् ।
षड़्जांशस्य ग्रहन्यामं रि-वर्ज्यात्र हि षाड़वा: ।
तृतीयदिवसे यामे गीयते विबुधैर्जनै: ॥
धनाश्री जयच्छ्रीयुक्ता धवलश्री मिश्रिता पुन: ।
मालश्री जायते विद्वन् रागकल्पद्रुमे इमा: ॥
सागपगसानिनिधधममगसा ।
मधनिसागमापमगसाधमग
मानिधमगसानिधगगसा ॥

अथ धनाश्री ( संगीतदर्पणे २।७४ )—

दूर्वादलश्यामतनुर्मनोज्ञा
कान्तं लिखन्ती विरहेण दूना ।
खेदे कपोले दधति दृगम्बु-
निष्यन्दनिर्धौतकुचा धनाश्री: ॥ इति ध्यानम् ।
मालश्री गौरीसंयुक्ता टोड़िका पुन: मिश्रिता ।
धनाश्री जायते विद्वन् कथिता हनूमन्मते ॥
पूर्णा धनाश्री संप्रोक्ता पञ्चमस्वरसंस्थिता ।
शेषयामे दिने गानं क्रियते सुखसंप्रदम् ॥
पमगरेसानिसागमपगमधपमगरेसा
रेसानिधपमगरेगपमगरेसा ॥
गमपसानिसागरेसानिधप
मगपमसारेसानिधपमगरेसा ॥

अथ दीपक: ( संगीतदर्पणे २।६४ )—

बाला रतार्थं प्रविलीनदीपे
गृहेऽन्धकारे सुभगो प्रवृत्त: ।
तस्या: शिरोभूषण-रत्नदीपे-
र्लज्जां दधौ दीपकरागराज: ॥ †
षड़्जांशग्रहन्यासं रिपौ वर्ज्जित औड़व: ।
तृतीययामे दिवसे गीयते विबुधैर्जनै: ॥
पलासी जयच्छ्रीयुक्ता धवलश्री धनाश्रीका ।
दीपको जायते विद्वन् ग्रीष्मर्तौ च प्रगीयते ॥
सागमधसानिधमगसागगमधसामगसानिधमगसा ॥

अथ प्रदीपिका

रक्ताम्बरा रक्तसुलोचना च
सूर्यप्रभा सूर्यमुखी मनोज्ञा ।
कान्ते समीपे कमनीयकण्ठा
प्रदीपिका दीपकरागिणीयम् ॥ इति ध्यानम् ।
धैवतांशग्रहन्यासा ऋषभस्वरवर्ज्जिता ।
तृतीययामे दिवसे प्रदीपा मा प्रगीयते ॥
धनिसागमपमासापमगसाधनिधसागसाध ॥
पलासी धानिसंयुक्ता जयतश्री च मिश्रिता ।
प्रदीपा जायते विद्वन् तृतीय-प्रहरात् परा ॥

अथ जयतश्री ( जयच्छ्री )

स्वर्णप्रभा वीणधरा कराग्रे
सौन्दर्य्यलावण्य-कलायताक्षी ।
पीनोन्नता रागिणी जयतश्री
कामिनी चेयं कथिता मुनीन्द्रै: ॥ इति ध्यानम् ।
धनाश्री धानिसंयुक्ता मालश्री तासु मिश्रिता ।
जयच्छ्री जायते विद्वन् तृतीयप्रहरात् परा ॥
मध्यमांशग्रहन्यासा ऋषभस्वरवर्ज्जिता ।
षाड़वा तु हि विज्ञेया जयच्छ्री जायते ध्रुवम् ॥
मगसापमगसासागपमगसानिधममगसा ।
ममममधसागगसापमगमधगसानिधपमगसा ॥

अथ भीमपलश्री

वीणा दधाना कमलायताक्षी
गम्भीरनादा सुरपुष्पगन्धी ।

† लज्जा: प्रकुर्व्वन् कृतवान् प्रदीप: । इति वा पाठ:

कलामयी सा कमनीयमूर्त्तिः
भीम पलासी कथिता मुनीन्द्रैः ॥ इति ध्यानम् ।
धनाश्री धानिसंयुक्ता जयत्-श्री मिश्रिता पुनः ।
भीम-पलासी जायेत करुणा-रौद्रसंयुता ॥
पञ्चमांशग्रहन्यासं ऋषभो वर्ज्जितस्वरः ।
षाड़वास्तु सुविज्ञेया सुष्ट भीमपलासिका ॥
पनिसागपमगसामगसानिगरेसा निपनि-
सागपमगसा । निसानिसागरेसागरेसानि-
पमपनिसानिपमगरेसानिपनिसा ।

अथ नटः ( संगीतदर्पणे २।६९ )—

तुरङ्गमस्कन्धनिषिक्तबाहुः
स्वर्णप्रभः शोणितशोणगात्रः ।
संग्रामभूमौ विचरन् प्रतापी
नटोऽयमुक्तः किल रागमूर्त्तिः * ॥ इति ध्यानम् ।
धैवतांशग्रहन्यासं संपूर्णो नटसंज्ञकः ।
द्वितीय-प्रहरादूर्द्ध्वा नटिका गीयते बुधैः ॥
धनिसागरेसानिधपमगरेसाधपमगरेसानिध ॥
मपधसारेसागरेसानिधपमगरेसा ॥

अथ श्रीरागः ( संगीतदर्पणे २।७० )—

अष्टादशाब्दः स्मरचारुमूर्त्तिः
धीरो लसत्पल्लवकर्णपुरः ।
षड्जादिसेव्योऽरुणवस्त्रधारी
श्रीराग एषः क्षितिपालमूर्त्तिः ॥ इति ध्यानम् ।
षड्जांशग्रहन्यासं क्वचिद्धैवत ईरितः ।
सन्ध्याकाले प्रगीयन्ते श्रीरागनृपरूपिणः ॥
सारेगरेसारेरेगमपमा
सासासानिनिधपममपपगगरे-
रेसारेरेगरेसानिधनिसारेसारेसा ॥
रेगगमधपधधपपममम्रधनिनि
निधगरेसासारेगमपमगरेसा ॥
गपधनिसारेसागरेसा
मगरेसानिधपमपमधमगरेसा ॥

* स्वर्णमूर्त्तिः । इति वा पाठः ।

अथ मालवी

पीनस्तनी शुभ्रविलासनेत्रा
नितम्बबिम्बप्रतिबद्धकाञ्ची ।
मुखारविन्दस्मरगीतरम्या
नृत्यानुगा मालविका प्रवीणा ॥ इति ध्यानम् ।
धैवतांशग्रहन्यासा क्वचित्पञ्चमवर्ज्जिता ।
सन्ध्याकाले सुष्ठुतरा गीयते मालविकैमा ॥
धनिसारेगमनिधगमसारेनिध धमगरेगमग-
रेरेसानिधधमगपसानिरेधपग ॥

अथ मालवः

नितम्बिनीचुम्बितवक्त्रपद्मः
शुकद्युतिकुण्डलवान् प्रमत्तः ।
सङ्केतशालां प्रविशन् प्रदोषे
मालाधरो मालवराग एषः ॥ * इति ध्यानम् ।
धैवतस्तीव्रसंप्रोक्तो मध्यमः कोमलस्तथा ।
गान्धारः कोमलकान्तिर्मालवः पूरणो मतः ॥
धमगरेगमगरेसानिध धपमगमगरेगरेसा ।

तथा च संगीतमकरन्दे—

गम्भीरनादो मधुरं सुरज्ञो
पाणिग्रणान् नारदसंप्रयोगात् ।
श्यामो युवा विप्रकुलप्रसूतः
वीणाधरो मालवराग एषः ॥

अथ मालवगौड़ः

वीणाविनोदप्रतिपन्नपाणिः
गुणाण् कथा नारदसंप्रयोगात् ।
श्यामो युवा विप्रकुलप्रसूतः
स मालवो गौड़मुनिप्रणीतः ॥ इति ध्यानम् ।
मध्यमांशग्रहन्यासं मध्यमग्राममूर्च्छना ।
तृतीयप्रहरादूर्ध्वा गीयते गौड़मालवा ॥
मपधनिसारेगमधममरेसानिधपमगरेसा ॥

* संगीतदर्पणे २।७२ मालवीध्याने अयं श्लोको दृष्टः यथा—
'स्वकान्तसंचुम्बितवक्त्रपद्मा शुकद्युतिः कुण्डलिनी प्रमत्ता ।
सङ्केतशालां विशती प्रदोषे मालाधरा मालविकेयमुक्ता ॥'

अथ त्रिवणा ( त्रवणा )

रम्भायास्तु तरोर्मूलनिषण्णा पीतवर्णभाक् ।
त्रिवणा सा च विज्ञेया पूर्णाश्री च वराङ्गना ॥
श्रीगौरीमारवा युक्ता ऋषभग्रह अंशभाक् ।
त्रिवण्युत्पत्तिराख्याता सन्ध्याकाले प्रगीयते ॥
रेमपनिसारेगमपमगसा ।
पनिरेनिरेसागमपरेसानिधपमगरेसा ॥

अथवा

त्रिवणा सा च विज्ञेया ग्रहांशन्यासधैवता ।
पूर्णास्तु हनुमत्प्रोक्ता सन्ध्याकाले प्रगीयते ॥

अथ गौरी

गौरद्युति: काञ्चनचारुदेहा
सौन्दर्य्यलावण्यकलायताक्षी ।
वीणां दधाना सुरपुष्पगन्धी
गौरी च उक्तास्तु श्रीकोहलेन ॥ †‡ इति ध्यानम् ।
मालवा गौरीसंयुक्ता श्रीरागे मिश्रितं पुन: ।
गौराद्युत्पद्यते यत्र दिनान्ते गानमिश्रिता ॥
धैवतांशग्रहन्यासं संपूर्णो जायते स्वर: ।
सन्ध्याकाले प्रगीयन्ते श्रीरागस्य वराङ्गना: ॥
धनिसागरेमपधसानिधप ।
ममपमागरेसाधनिनिधप ॥

अथ पूरवी

निद्रालसा गात्रकपटेन युक्ता
कान्तं स्मरन्ति विरहप्रपूर्णा ।
सौन्दर्य्यलावण्यकमलायताक्षी
सा पुरवी शेषदिने तुरीये ॥ इति ध्यानम् ।

पुरवीया जैतासंयुक्ता मालवा गौरीसम्भवा ।
पुरवीगान: कर्त्तव्यो दिवसे चतुर्थयामे ॥
पमगरेसामगरेसा निरेगममधमगममरेगरेसा ॥
मधसानिसारेसागमगरेसानिधपमगरेसा ॥

अथ मेघराग: ( संगीतदर्पणे २।७६ )—

नीलोत्पलाभवपुरिन्दुसमानचैल: §
पीताम्बरस्तृषितचातकयाचमान: ॥
पीयूषमन्दहसितो घनमध्यवर्त्ती
वीरेषु राजति युवा किल मेघराग: ॥ इति ध्यानम् ।
गान्धारांशग्रहन्यासं क्वचित् धैवतवर्ज्जित: ।
वर्षाकाले सदा ज्ञेया मेघरागे घनद्युति: ॥

तथा च सङ्गीतचन्द्रिकायां ( २।८२ )—

पर्य्यङ्के प्रियया सार्द्धमासीन उपलालयन् ।
पीताम्बर: सुभूषाढ्यो मेघरागो घनद्युति: ॥
नीलो महाहसितसन्निविष्ट:
घनद्युतिर्वीररसे निविष्ट: ।
वर्षासु मेघविद्युच्छटासु चोक्त:
प्रचण्डवीर: किल मेघराग: ॥
पञ्चमांशग्रहन्यासकृत: गान्धार ईरित: ।
विष्णुरूपो मेघरागो वीररसे प्रयुज्यते ॥
पपगरेसारेसागमपपगमनिपमगरेसा ॥

अथ मल्लारिका ( संगीतदर्पणे २।७७ )—

गौरी कृशा कोकिलकण्ठनादा
गीतच्छलेनात्मपतिं स्मरन्ती ।
आदाय वीणां मलिना रुदन्ती
मल्लारिका यौवनदूनचित्ता ॥ इति ध्यानम् ।

सङ्गीतदर्पणे ( २।५८ )—

मेघागमे रम्यवपुर्दधाना
प्रख्यापनीया सततं मुरारे ।
मा नर्त्तयन्ती शिखिनां कुलानि
मल्लारिकेयं कथिता नृपेण ॥

† "चारुरम्भातरोर्मूले निषण्णा कनकप्रभा ।
नताङ्गी हारललिता कान्तं न त्रिवणा मता ॥"
इति संगीतदर्पणधृत-पाठ: २।८६।

‡ 'निदर्शयन्ती श्रवणावतंसभासाङ्कुरं कोकिलनादरम्यम् ।
श्यामा मधुस्यन्दिमधुस्वनादा, गौरीयमुक्ता किल कोहलेन ॥'
इति संगीतदर्पणधृत-पाठ: २।५५।

सङ्गीतदामोदरे—

सत्त्वावदातं प्रणीतं दधातु
प्रलम्बकर्णः कुमुदेन्दुवर्णः ।
वीणां दधानश्चातकयाच्यमानः
मल्लाररागो घनश्याममूर्त्तिः ॥
मेघगौड़श्च सारङ्गस्त्रये जाता मल्लारिका ।
वर्षाकाले सदा ज्ञेया ज्ञाता रागविशारदैः ॥
गान्धारांशग्रहन्यासं पूर्णा मल्लारिका मता ॥
गमपधनिसांरेंमानिधपमगम ।
पपगगरेसारेसागमपपगमनिधमसारेसा ॥

अथ सोरठी ( संगीतदर्पणे २।८५ )—

पीनोन्नतस्तनसुशोभनहारवल्ली
कर्णोत्पलोभ्रमरनादविलग्नचित्ता ।
याति प्रियान्तिकमतिश्लथबाहुवल्ली
सौराष्ट्रिका मदनमूर्त्तिः सुचारुगौरा * ॥
षड्जे च ग्रहविन्यासमर्द्धरात्रौ प्रगीयते ।
सोरठी सुन्दरी नारी मेघरागस्य योषितः ॥
मल्लारसिन्धुगौड़श्च मिश्रितः सोरठी भवेत् ।
देशसंज्ञा क्वचित् ज्ञेया अर्द्धरात्रयां प्रगीयते ॥
सारेगमपधनिसांनिधपमगरेसा ।
मपधसांरेसागरेसामगरेसा रेसानिधपमगरेसा ॥

अथ सारङ्गनट्टा ( सङ्गीतदर्पणे २।८३ )—

वीणां दधानो दृढ़बद्धवेणी
संख्यासमं मञ्जुलवृक्षमूले ।
जाम्बुनदाभा च निषण्णदेहा
सारङ्गनट्टा कथिता मुनीन्द्रैः ॥

सङ्गीतरत्नाकरे—

करधृतवीणा सख्या सहोपविष्टा कल्पतरुमूले ।
दृढ़तरनिबद्धकवरी सा सारङ्गा तु रागिणी प्रोक्ता ॥

निषादांशग्रहन्यासं धगौ वर्ज्जित औड़वः ।
मध्याह्ने गानः कर्त्तव्यः सारङ्गा मेघवल्लभा ॥
चौताल । निसारेसामपमपरेसा निसारेसानिधपम ।
रेसानिस्वरप्रोक्ता षड्जादिक-मूर्च्छना ॥

अथ वड़हंसी

अतिचतुरसुगौरा पीतवर्णायताक्षी
दृढ़तरकृतवेणी सेविता कल्पवृक्षैः ।
अतिचतुरसुगम्या वाड़हंसीति प्रोक्ता
मुनिमतमवलोक्य कीर्त्तिता रागिणीयं ॥
सारङ्गस्वरमेघश्च कामोदो मिश्रितं पुनः ।
वड़हंसी हंसयुक्ता मध्याह्ने गीयते बुधैः ॥
निषादांशग्रहन्यासं सम्पूर्णा वड़हंसिका ।
मध्याह्ने गीयते विद्वन् संगीते परिभाषिता ॥
निनिसासारेरेरेममपपनिनि सागरेसामानिमपरेसा ॥

अथ मध्यमादिः ( संगीतदर्पणे २।४७ ) —

पत्या सह संपरिरभ्य कामं
संचुम्बितास्या कमलायताक्षी ।
स्वर्णद्युतिः † कुङ्कुमलिप्तदेहा
सा मध्यमादिः कथिता मुनीन्द्रैः ॥
सावन्तवड़हंसस्य वृन्दावनस्ततः परा ।
मध्यमादि च संप्रोक्ता मध्याह्ने गीयते बुधैः ॥
ऋषभग्रहसंयुक्ता रधौ वर्ज्जयन्या औड़वम् ।
रेमपनिसा प्रोक्ता सारङ्गा मध्यमादिका ॥

अथ ब्रह्मताल—।०।००।०००

रेसासानिमपरेरेमपमरे-
रेसारेमपनिसानिमपरेसा । मपनिसानिसारेम-
पमरेसारेसानिपमरेसा ॥

अथ लङ्कदहना

भस्मोज्ज्वलोत्पलशूलधारणी वह्निस्वरूपा गम्भीर-नादा मध्याह्नसमये हनुमत्सुप्रोक्ता सा लङ्कदहना मेघस्य भार्य्या ।

* करमुक्तं मिलिताङ्गयष्टिः । इति मुद्रितसंगीतदर्पणपाठः ।

† 'स्वर्णच्छविः' । इति पाठान्तरम् ।

गान्धारग्रहमाचष्टे वीरे रौद्रे प्रयुज्यते ।
धगौ वर्जितमौड़वा च मध्याह्ने प्रगीयते ॥
रेसानिरेसापमपमनिरेसामरेमानिपमरेसा-
निनिरेसानिपमरेसा ॥

अथ गुणकली ( गुणकिरी । संगीतदर्पण २।५६ )—

शोकाभिभूतनयनारुणदीनदृष्टि-
र्नम्रानना धरणीधूसरगात्रयष्टि: ।
जीमूतचारुकवरी प्रियदूरवर्त्ती *
संकीर्त्तिता गुणकिरी करुणे कृशाङ्गी† ॥ इति ध्यानम्
धैवतांशग्रहन्यासं कुत्रचित् पञ्चमस्वर: ।
मारवादेशकारस्य गौरायां जायते बुधै: ॥
धगसारेनिरेमगसा ॥ निमाधसामगरेसा ॥

अथवा

पञ्चमांशग्रहन्यासं गुणक्री च इति स्मृता ।
सौवीरी मूर्च्छना ज्ञेया कौशिकस्य वराङ्गना ॥
सम्पूर्णा भरतमते ।

अथ सुखावती ‡ ( संगीतनारायणे )

वासं वसाना शरदभ्रशुभ्रं
विरिञ्चिदेवीपरिकर्म्मदक्षा ।
कुन्दावदाता चतुराननस्य
सुखावती लब्धसमृद्धसेवा ॥ इति ध्यानम् ।
गान्धारांशग्रहन्यासं खम्भाती-पर्य्यमिश्रिता
नीलाम्बरीसुसंयुक्ता सुखावती भवेत्तदा ॥
गमपधनिसारेगगमधसापसानिरेगसासारेग

अथ श्यामराग:

वीणानिनादे प्रतिपन्नमूर्त्ति:
सौन्दर्य्यलावण्यसुवर्णकान्ति: ।
श्यामघनमेघद्युतिस्वरूप:
स श्यामराग: कथितो मुनीन्द्रै: ॥ इति ध्यानम् ।
कल्याणीजैतसंयुक्त: केदारो मिश्रित: पुन: ।
तस्योत्पत्ति: भवेद्विद्वन् सन्ध्याकालेषु गीयते ॥

षड्जांशग्रहन्यासं तीव्र-गान्धार ईरित: ।
शेषे कोमलविज्ञेय: श्यामराग: प्रकीर्त्तित: ॥
सागमगरेसानिधनिसारेगमपमगरेसा ॥
निधनिमागरेसानिधपसागरेमानिगरेसा ॥

अथ आशा

योगीयाशावरी गौरी गान्धारस्वरमिश्रिता ।
आशारागो भवेद्यत्र पूर्वपुत्र: प्रकीर्त्तित: ॥
गान्धारग्रहमाचष्टे द्वे प्रहरार्द्धे दिने तथा ।
गगरेसासासानिधपमगसा ॥

अथ सोमराग: ( संगीतनारायणे )

निशाङ्गनां वक्षसि स्थापयित्वा
कलङ्ककुम्भात् सुरतं श्रयन्तीम् ।
रसज्ञो गुणज्ञ: सुगौरगात्रो
वीणा दधान: स हि सोमराग: ॥ इति ध्यानम् ।
ऋषभांशग्रहन्यासं सप्तस्वरसुसंयुतं ।
निशायां गीयते विद्वन् सोमराग: प्रकीर्त्तित: ॥
कल्याणकान्हाड़ायुक्त: शङ्करामिश्रित: पुन: ।
सोमराग: प्रगीयते भरतकथितो मुने ॥
रेगमपधनिसासानिधपमगरे ।
मपधसागरेसानिपमरेसारे ॥

अथ नटनारायण: ( संगीतनारायणे )

स्त्रीवेशधारी पुरुषो नवीन:
सङ्गीतशास्त्रे श्रमिमादधान: ।
गायन् सतालं सलयं मनोज्ञ:
स्यान्नटनारायणराग एष: ॥ इति ध्यानम् ।
काङ्काड़ानटसंयुक्त: कल्याणमिश्रित: पुन: ।
नटनारायणो जात: सन्ध्याकाले प्रगीयते ॥
गान्धारांशग्रहन्यासं सम्पूर्णं हनुमन्मते ।
क्वचिद्दृषभवर्ज्जितं नटनारायणस्य च ॥
गमपधनिसारेरेसानिधपमगरेसा ॥
मपधसागरेसानिधपमगरेसा ॥

---

* चाम्बुजचारुकवरी प्रियदूरवक्ता । इति पाठान्तरम् ।
† करुणेतकृशाङ्गी । इति वा पाठ: । ‡ सुखावती इति संगीतनारायण: ।

अथ हम्मीररागः

श्रुतौ दधानो नवकर्णिकारं
सङ्केतशालामनङ्गमूर्त्तिः ।*
वीणा दधानः सुकरैः करस्थः
हम्मीररागः कथितो मुनीन्द्रैः ॥ इति ध्यानम् ।

कल्याणजैतसंयुक्तो तथा कामोदमिश्रितः ।
केदारस्वरसंयुक्तो हम्मीरनामको भवेत् ॥
षड्जांशग्रहन्यासं पूर्णाख्या च हम्मीरिका ।
निशायाः प्रथमे यामे सङ्गीते परिकीर्त्तिता ॥
सारिगमपधनिसानिधपमगरेसामधगसापमगसासा-
निरिगसामगरेसानिधपमगरेसा ।

आभीरी

विलोकयन्ती अधिकं गभीरे
विश्लेषयन्ती शुभगात्रगौरा ।
पीनस्तनी कुन्तलघृष्टगण्डा
त्वाभीरिकाख्या हृदये शुभं स्यात् ॥ इति ध्यानम् ।

भीमा-पलाशी सिन्दुरा पूरवास्वरसंयुता ।
आभीरी जायते विद्वन् धैवतग्रहसंस्थिता ॥
षड्जांशग्रहन्यासं ऋषभो रञ्जितो स्वरः ।
यामे तृतीये संयुक्ता आभीरी गीयते बुधैः ॥
सागमगसापगसानिधमगसानिध ।
मपधसामधसानिधपमगसा ॥

अथ कर्णाटः ( संगीतदर्पणे २।६६ )—

कृपाणपाणिर्गजदन्तपत्र- †
मेकं वहन्ती दक्षिणहस्तकेन ‡ ।
संस्तूयमानः सुरचारणौघैः
कर्णाटरागः क्षितिपालमूर्त्तिः ॥ § इति ध्यानम् ।

धैवतांशग्रहन्यासो धैवतादिकमूर्च्छना ।
प्रथमे प्रहरे गानं रसे वीरे प्रयुज्यते ॥

* अन्यापरमस्मि शुकस्य सारिका । इत्यधिकपाठः ।

† 'खण्ड' इति वा पाठः ।

‡ 'निजहस्तकेन' इति वा ।

§ सा कानडेयं किल दिव्यमूर्त्तिः । इति मुद्रितसंगीतदर्पणपाठः ।

शुक्लदेवगिरियुक्ता वेलावली च मिश्रिता ।
कर्णाटोऽयं रसे वीरे प्रयुक्तो भरतेन च ॥
धनिसागरेसानिपमगरेसा ॥
मगपसाधसानिगसारिपसा ॥

अथ भखार:

भैरवो मालकौशश्च ललिता मिश्रिता पुनः ।
भखारे जायते यत्र प्रातःकाले प्रगीयते ॥
निषादांशग्रहन्यासं पञ्चमस्वरवर्ज्जितः ।
निशागमे गायत्यत्र भखाररागसंज्ञकः ॥
निसारेगमगरेमाधनिसागरेसामगरेसा ॥
गमधनिसारेसामगरेसानिधपमगरेसा ॥

अथ योगिनी

काली कराली सुभयङ्करी च
कङ्काली खनित्रत्रिशूलधारिणी ।
संग्राममूर्मी सुपिवन्ती रक्तं
रक्ताम्बरधारिणी योगिनीयम् ॥ इति ध्यानम् ।

धैवतांशग्रहन्यासं मावरीदेशीजन्मभूः ।
आद्याह्निके यामे गानं क्रियते योगिनी इदम् ॥
धनिसारेगमपध ॥ गमपधसागरेसानिधपमगरेसा

अथ नागध्वनिः

श्रीखण्डशैलशिखरे गजमौक्तिकाद्यैः
सौन्दर्य्यशोभनवती सुमृगायताक्षी ।
वीणाविनोदी समयस्तुयन्त्रधात्री
नागध्वनिः चन्दनेन लेपगात्री ॥ इति ध्यानम् ।

गान्धारी मावरी देशी भूपालीमिश्रितः पुनः ।
नागध्वनिर्जायते स्म मध्याह्ने सा च गीयते ॥
गगपपममधधरेरेनिनिसासा ॥
मपधनिसागरेसानिधगसा ॥

अथ सैन्धवी । सङ्गीतरत्नाकरे—

प्रलम्बकर्णा वपुषा च गौरी
वीणा दधाना सुरपुष्पगन्धी ।
वक्त्रानुरक्ताचरभूषणीयं
गीतेषु दक्षा किल सैन्धवीति ॥

संगीतदर्पणे ( २।५१ )—

त्रिशूलपाणि: शिवभक्तिरक्ता
रक्ताम्बरा धारितबन्धुजीवा ।
प्रचण्डकोपा रसवीरयुक्ता
सा सैन्धवी भैरवरागिणीयम् ॥ इति ध्यानम् ।
धैवतांशग्रहन्यासं सम्पूर्णा सैन्धवी मता ।
तृतीयप्रहरे गेया भैरवस्य च वल्लभा ॥
धनिसारिगमपधपमगरिसानिध ॥
मपधमारिसासगरिसानिध ॥
शक्तिहस्ता महाकाया पुष्पमाला वितन्वती ।
चन्दनपुष्पार्चितागात्रैर्भटो-सिन्धुगौरक: ॥

अथ माधवी

नीलं निचोलं वपुषा दधाना
प्रिये च सा लक्षितमञ्जुभक्ती ।
तमालतालं शिखरे चरन्ती
प्रियानुरागादिव माधवीयम् ॥ इति ध्यानम् ।
मध्यमांशग्रहन्यासं रिपा वर्ज्जितषाड़वा ।
लङ्कदहनमिश्रा सारङ्गा माधवी-स्वरा ॥
ममधनिसागमधमगमधसानिपमनिध ॥

अथ मनोहा

धैवतांशग्रहन्यासं पञ्चमं परिवर्ज्जयेत् ।
औड़व: स तु विज्ञेयो मल्लोहा निशि गीयते ॥
केदारो जलधरैर्युक्तो मल्लारस्वरसंयुत: ।
गीयते रागपुत्र: स्यात् धनिसागमप-स्वरा: ॥
धनिसागमधमगसानिधगमधनिसारिगमध ॥

अथ गौड़गिरि: ( संगीतनारायणे )

रतोत्सुका कान्तपथप्रतीक्षा-
मापादयन्ती मृदुपुष्पतल्पे ।
इतस्तत: प्रेषितदृष्टिवार्त्ता
श्यामाङ्गिका गौड़गिरि: प्रसिद्धा ॥ इति ध्यानम् ।
गान्धारांशग्रहश्चैव वर्षाकाले प्रगीयते ।
पूर्णा गौड़वधू: प्रोक्ता तृतीयप्रहरात् परा ॥
गमपधनिसागपपगमगरिसा ॥
गमपसासानिरिसामगरिसा ॥

अथ वङ्गाल: । रत्नाकरे ( संगीतनारायणे )—

मनोज्ञकाञ्ची गुणगुम्फिताङ्ग:
स्रजं दधानो धरणीधरस्थ: ।
चण्ड: कुमारो रमणीयमूर्त्ति-
र्वङ्गालराग: शुचिमाससमान: ॥

संगीतदर्पणे ( २।४८ )—

कक्षानिवेशितकरण्डधरायताक्षो
भास्वत्त्रिशूलपरिमण्डितवामहस्ता ।
भस्मोज्ज्वला निविड़बद्धजटाकलापा
वङ्गालिकेत्यभिहिता तरुणार्कवर्णा ॥ इति ध्यानम् ।
कण्ठे धृत्वाक्षमाला यज्ञोपवीतधारक: ।
वेदे अत्यन्तविद्वान् स शुक्लवस्त्रसमुज्ज्वल: ॥
पाणिपात्रं कराग्रे च शिवार्च्चाध्यानसंयुत: ।
वङ्गालराग: सर्व्वशो गीयते पुत्रभैरव: ।
प्रात:काले नमस्यस्त्वं कथित: स्वरसिद्धये ॥
वङ्गाली औड़वा ज्ञेया ग्रहांशन्यासषड्जभाक् ।
रिधहीना च विज्ञेया मूर्च्छना प्रथमा मता ॥
पूर्णा वामत्रयोपेता कल्लिनाथेन भाषिता ॥
ढोड़ी वराड़ी जयतश्रीर्जयन्तश्च त्रयमिश्रिता वङ्गालिका ।
सागमपनिसामानिपमगसामपसामानिगसागमपसा ॥

अथ पटमञ्जरी ( संगीतदर्पणे २।६३ )—

वियोगिनी कान्तविशीर्णगात्रा
स्रजं वहन्ती वपुषातिमुग्धा * ।
आश्वास्यमाना प्रियया च सख्या
सा धूसराङ्गी पटमञ्जरीयम् ॥ इति ध्यानम् ।
देशीमालवमञ्जर्य्या मालश्रीमिश्रित: पुन: ।
पञ्चमांशग्रहन्यासं जायते पठमञ्जरी ॥

---

* 'शुष्का' इति वा पाठ: ।

पञ्चमस्वरमुख्या च संपूर्णा पठमञ्जरी ।
पधनिसारिगम-स्यात् तृतीयप्रहरात् परम् ॥
पमगरेसानिधपमगरेसारिगमप ॥
गमपधसागरेसानिधपमगरेसाप ॥

अथ टक्का ( संगीतदर्पणे २।८१ )—

शय्यासु सुप्तं नलिनीदलानां
वियोगिनी वीक्ष्य विपन्नचित्ता ।
सुवर्णवर्णा गृहमागता सा
सुभाषयन्ती * किल टक्कसंज्ञा ॥ इति ध्यानम्
ऋषभांशग्रहन्यासं संपूर्णा ऋतुमन्मते ।
सन्ध्याकाले प्रगीयन्ते श्रीरागस्य सुयोषितः ॥

अथ माधवः

नृत्ये गीतावसक्तं करधृतसुरसंवादयन्तीं सुवीणां
कस्तूर्यामोदयन्तीं पिकमृदुवचना चर्च्चिता चन्दनाद्यैः ।
देवान् साध्यादिसर्व्वानतिपुरुषमतिः स्वे च वर्णाम्बरे च
गीयन्ते स्मात्र मरुमधुना माधवो राग एषः ॥
चन्दनचर्च्चितगात्रं शीर्षमुकुटपीतवस्त्रम् ।
प्रभाते गायन्ति स्वर्गलोके माधवराग एषः ॥
सारङ्गकान्हड़ायुक्तो मधुमाधवमिश्रितः ।
निषादांशग्रहन्यासं माधवः स प्रकीर्त्तितः ॥
निसारिगमपधनिसानिधपमगरेसा ॥

अथ मधुरराग:

मधुरस्वरसंयुक्ता मव्वार्थगुणसंयुतः ।
गौरगात्रकाममूर्त्तिर्मधुररागः कथ्यते ॥
विहागेमनकल्याणं केदारीमिश्रिता यदा ।
गान्धारग्रहमाचष्टे मधुररागः जायते ॥
गमपधनिसानिधपमगरेसा ॥

अथ देशी ( संगीतदर्पणे २।६७ )—

निद्रालसं सा कपटेन कान्तं
विबोधयन्ती सुरतोत्सुकेव ।
गौरी मनोज्ञा शुकपिच्छवस्त्रा
ख्याता च देशी रसपूर्णचित्ता ॥ इति ध्यानम् ।
मध्यमांशग्रहन्यासं देशी संपूर्णिका मता ।
गुर्ज्जरी टोड़ीकायुक्ता मिश्रिताशावरी पुनः ॥
मपधनिसारिगमगरेसा ॥ मपधसागरेसानिधपम ॥

अथ पूर्व्वाराग:

विमलकमलकान्ती सुन्दरी गात्रगौरा
युवतीप्रियसुखदं कामदेवस्य मूर्त्तिः ।
* * †

तृतीयप्रहरे दिवसे पुरवा स प्रसिद्धः ॥
पञ्चमांशग्रहन्यासजातो मालवगौड़ च ।
त्रिभिर्मिश्रो भवेद्रागः पूरवा नामसंज्ञकः ॥
पमगरेसारिगमपधनिसानिध ॥
मपनिसारिसागरेसानिधपमगरेसा ॥

अथ सिन्धुड़ा ( संगीतनारायणे )

समुद्रनीलद्युतिरम्बुजाक्षी
प्रवादयन्ती सकला सयन्त्रम् ।
रत्नैर्विचित्राभरणा सुकेशी
सा सिन्धुड़ा कान्तसमीपसंस्था ॥ इति ध्यानम् ।
मध्यमांशग्रहन्यासं सिन्धुरा पूरवा तथा ।
वसन्तर्त्तौ सदा गेया तृतीयप्रहरात् परम् ॥
मपधनिसारिगम ॥

अथ देशाख्यः ( संगीतदर्पणे २।६१ )—

वीरे रसे व्यञ्जितरोमहर्षः
शिरोधराबद्ध*विशालबाहुः ।
प्रांशुः प्रचण्डः किल इन्दुरागो
देशाख्यरागः कथितो मुनीन्द्रैः ॥ इति ध्यानम् ।
गान्धारांशग्रहन्यासः क्वचित् ऋषभ ईरितः ।
सम्पूर्णा सा च विज्ञेया शार्ङ्गदेवेन भाषिता ॥
काफ़ड़ासुहासंयुक्तः सारङ्गसुरमिश्रितः ॥
देशाख्यो जायते दिने द्वितीयप्रहरार्द्धके ॥
गमपधनिसारिगमपधगरेसानिधसा ॥

* कान्तं भजन्ती । इति मुद्रितसंगीतदर्पणपाठः ।

† अत्र तृतीयचरणाभावः । * 'निबद्ध-सन्नद्ध' इति पाठान्तरम् ।

अथ गौरसारङ्ग:

वीणाविनोदी दृढबद्धवेणी
कल्पतरुसंस्थितगौरगात्र: ।
तृतीययामे पिकनादतुल्य:
सारङ्गगौर: कथितो मुनीन्द्रै: ॥ इति ध्यानम् ।

ऋषभांशग्रहन्यासं गौरसारङ्ग एव च ।
गौड़ा सारङ्गसंयुक्ता पुरीया सा संमिश्रिता ॥
दिवसान्ते सदा ज्ञेयो गौड़सारङ्ग ईरित: ।
रेगमपधनिसारेगमपधनिसा ॥

अथ गौड़करी

अवचित्य कुसुमराशीन् वितरन्ती पुष्पदामकामिभ्य:
नन्दनवनोपकण्ठे गौड़करी सा प्रसिद्धा स्यात् ॥

संगीतरत्नाकरे—

शैलाग्रशिखरे गौरी वंशशब्देन चारुणा ।
नर्त्तयन्ती प्रियतममेषा गौड़करी स्मृता ॥
गान्धारे श्रीनिवासस्य मल्लारे गौड़मिश्रिता ।
रामकीरसंयुक्ता गौड़करी इति स्मृता ॥
गमपधनिसारेसानिधपमगगमपनिसाधरेगम
निसारेगमसा ॥

अथ विभासराग

शुभ्राम्बरो गौरवर्ण: सुकान्ति:
धीरोन्नमत् कुन्तलघृष्टगण्ड: ।
सूर्य्योदये कुक्कुटपक्षिशब्दे
विभासराग: स्मरचारुमूर्त्ति: ॥ इति ध्यानम् ।

भूपाली देशकारश्च मालवो जन्मभू: स्मृता ।
धैवतादिस्वरा: सप्त विभासे गीयते बुधै: ॥
धनिसागरेसामधपमगरेमानिध ॥
गमधनिसागरेसानिधपमगरेसानिध ॥

अथ देशकारी ( संगीतदर्पणे २।७८ )—

भर्त्रा समं केलिकलारसज्ञा
सर्व्वाङ्गपूर्णा कमलायताक्षी ।
पीनस्तनी रुक्मतनु: सुकेशी
संपूर्णचन्द्रानना देशकारी ॥ इति ध्यानम् ।

मालीगौरा विभासेषु देशकारस्य जन्मभू: ।
ऋषभस्वरे निवास: प्रात:काले प्रगीयते ॥
रेगमपधनिसा
तीव्रगान्धार ऋषभ-संवादिमध्यमस्तथा ।
अनुवादिपञ्चमैर्युक्ता संपूर्णा देशकारिका ।
धगरेसानिमपधमागरेमानिध ॥
गमधनिपसारेसागममनिध ॥

अथ वेलावली ( संगीतदर्पणे २।४८ )—

सङ्केतदीक्षां दयिते च दत्त्वा
वितन्वती भूषणमङ्गकेषु ।
मुहु: स्मरन्ती स्मरमिष्टदेवं
वेलावली नीलसरोजकान्ति: ॥ इति ध्यानम्

पञ्चमांशग्रहन्यासं तीव्रगान्धारमध्यमम् ।
शेषानुदात्ता विज्ञेया पूर्णा वेलावली मता ॥

मतान्तरे—

नेत्रे कज्जलरञ्जिते तिलकिते नासाग्रमुक्ताफलम्
भाले भाति सुकुङ्कुमस्य तिलकं गौराङ्गचित्राम्बरा ।
वेणी चम्पककेतकीसुकुसुमै: मार्द्दं करे विटिका-
नानासौरभचर्च्चिताखिलवपुर्वेलावलीयोषित: ॥
गान्धारांशग्रहन्यासं पूर्णा प्रथमयामका ।
दिव गीयते विद्वन् वेलावलीतिसंज्ञका ॥
कल्याणा देवगिरिका अन्येयामिश्रिता मता ॥
गमपधनिसारेगमपपधनिसानिध ॥
गमधनिसानिधमगरेसामपधनिसागरेसानिधपमगरेसा॥

अथ षट्राग:

जटाजूटधारी शिवशिखरकैलासवसति-
स्थिता-भस्मालिप्तो मधुरमृदुहासी मुनिवर: ।
सदा षड्रागोऽयं सततनितरां ध्येय: सुपदां
प्रभाते गायन्ति मधुरसुरगीतार्थनिलयम् ॥ इति ध्यानम् ।

यदा रागस्यान्ते मुनिगणपरात्माद्विभवी ।
नमोद्भीरुर्नाम्ना गतिकतरगो भैरवतनु: ॥
भैरवो गुर्ज्जरी टोड़ी देशी गान्धार एव च ।
रामकी स्वरसंयुक्त: षट्रागश्च भवेत्तदा ॥

धैवतांशग्रहन्यासं धैवतादिकमूर्च्छना ।
सम्पूर्णां सुप्रभाते च गीयते षट् सुसंज्ञकः ॥
धधनिनिसासारेरेगगममपप ।
रूपतार । धसासामानिनिधधपपममगगरेसा ।
मपधनिसागरेसामगरेमानिधपममगरेसा ॥

अथ देवगिरी ( संगीतदर्पणे २।८४ ) ·

कादम्बिनीश्यामतनुः सुवृत्ता
तुङ्गस्तनी सुन्दरहारवल्ली ।
चित्राम्बरा मत्तचकोरनेत्रा
मदालसा देवगिरी प्रदिष्टा ॥ इति ध्य
अलैयास्वरसंयुक्ता विहागेन सुमिश्रिता ।
देवगिरीत्युत्पत्तिस्तु कथिता हनुमन्मते ॥

संगीतार्णवे ( संगीतनारायणे )—

भ्रमन्ती नर्त्तने श्यामा पुष्पहारसमन्विता ।
ख्याता देवकिरी ज्ञेया करार्पितसखीकरा ॥
षड्जांशग्रहन्यासं पूर्णा देवकिरिर्मता ।
दिवसे प्रथमयामे गीयते विबुधैर्जनैः ॥
सारेगमपधनिसानिधपमगरेसा ॥
गमपधसानिसागरेसानिधपधपमगरेसा ॥

अथ आशावरी ( संगीतदर्पणे २।७५ )—

श्रीखण्डशैलशिखरे शिखिपुच्छवस्त्रा
मातङ्गमौक्तिकमनोहरहारवल्ली ।
आकृष्य चन्दनतरोरुरगं वहन्ती
साशावरी वलयमुज्ज्वलनीलकान्तिः ॥ इति ध्यानम्
निषादांशग्रहन्यासं क्वचित् गान्धार ईरितः ।
यामे द्वितीये गीयते आशावरी सुखैर्नरैः ॥
देशीगान्धारटोड़ी च मिश्रिता त्रयसंयुता ।
आशावरी भवेन्नारी गायने रतिकामदा ॥
निसारेगमपधश्च ॥
निसारेमनिधपमगरेसाधपमगरेसाममपध-
पमपधसानिमागरेसानिधपमगरेसा ॥

अथ योगीया

जटाकलापांशुविभूतिधारी
त्रिशूलसर्पञ्च वीणा दधाना ।
प्रचण्डकोपा रसवीरयुक्ता
सा योगिनी योगशास्त्रैः प्रवीणा ॥ इति ध्यानम् ।
गान्धारांशग्रहन्यासं योगीयाशावरी तदा ।
वैराग्यज्ञानसंयुक्ता ब्रह्मध्यानसुमिश्रिता ॥
देशीगान्धाराशावरी मिश्रिता योगीया भवेत् ।
दिवसे द्विप्रहरार्द्धे च गीयते विबुधैर्जनैः ॥
आशावरी च देशीया गान्धारेण सुमिश्रिता ।
त्रये कृते योगिनी स्याद्विप्रहरार्द्धेषु गीयते ॥
गगरेसानिनिधधपपममगगरेसागमपनिसारेमाम
गरेगरेसा मानिधपमगरेसा ।

अथ मोहनरागः

मदनमोहनरूपी वंशीधारी कराग्रे
खगमृगपशुपक्षिमोहिताखिलविश्वम् ।
जगतीतलसुवीर्यः शैवरूपार्थकेतः
विहरतु वनकुञ्जे मोहनो राग एषः ॥ इति ध्यानम् ।
धैवतांशग्रहन्यासं क्वचित् मध्यम ईरितः ।
निशान्ते गीयते विद्वन् सङ्गीतैः परिभाषितः ॥

अथ गान्धारः । संगीतरत्नाकरे—

आदाय वीणां धृतयोगपीठे
गङ्गाधरध्याननिमग्नचित्तः ।
योगासने मौलिजटा दधानो
गान्धाररागः कथितो मुनीन्द्रैः ॥ इति ध्यानम् ।

मतान्तरे ( संगीतनारायणे )—

जटां दधानः कृतभूरिभूषः
काषायवासस्तनुदेहयष्टिः ।
सयोगपट्टकृततर्जनमुद्रो
गान्धारराग: कथितो मुनीन्द्रैः ॥
सम्पूर्णश्च भवेद्रागो प्रभाते गानमिष्यते ॥

धैवतांशग्रहन्यासं तीव्र-मध्यम एव ।
टोड़ी आशावरी देशी गान्धारीतूपत्तिः कथ्यते ॥
धपपगगरेमपपधसानिनिधधपपमगगरेसामम-
पपपधसासामानिनिमा गरेसासामपनिधप ॥

अथ गान्धारी

शरीरःस्थलधारिणी मितपदैः कमलायताक्षी भृशं
दिव्याभूषणभूषिनातितरुणी ताम्बूलहस्ताग्रका ।
श्यामा सभृतकञ्चुकी मलयजैरादित्यता सुन्दरी
नृत्यन्ती भृतनूपुरा मृदुरतिर्गान्धारिणी रागिणी ॥
इति ध्यानम् ।

धैवतांशग्रहन्यासं क्वचित् मध्यम ईरितः ।
सम्पूर्णा सा सुवस्त्रा च गान्धारी रागिणी ध्रुवम् ॥
धपमगरेमारेगममपधमगसारेसानिधपममगरेमा ॥

अथ नागध्वनिः ।

नागध्वनिसमारूढ़ो जेता हिङ्गुलसन्निभः ।
सितवासा कुम्भवर ऐरावतकुलोद्भवः ॥
ढक्कान्वयः शब्दध्वनिः रिपौ वर्ज्जितषाड़वः ।
षड़्जन्यासग्रहांशो यो गेयो वीरवरैर्दिवा ॥
मागमधमागसागमधनिसागमसानि ॥

अथ भूपाली ।

गौरद्युतिः कुङ्कुमरक्तदेहा
तुङ्गस्तनी चन्द्रमुखी मनोज्ञा ।
भर्त्तुः स्मरन्ती विरहेण दूना
भूपालिकेयं रसशान्तियुक्ता ॥ इति ध्यानम् ।
रात्रौ प्रथमयामे च धैवतग्रहसंस्थिता ।
स्यात्तु भूपालिका ज्ञेया सङ्गीते परिभाषिता ॥
धनिसारेगमपगमपधनि सानिगरेसामगरेसा ॥

अथ कल्याणः ( संगीतदर्पणे २।८२ )—

कृपाणपाणिस्तिलकं ललाटे
सुवर्णवेशः समरे प्रविष्टः * ।
प्रचण्डमूर्त्तिः † किल रक्तवर्णः
कल्याणरागः ‡ कथितो मुनीन्द्रैः ॥ इति ध्यानम्
गान्धारांशग्रहन्यासं पूर्णः कल्याण ईरितः ।
सन्ध्याकाले प्रगीयते कल्याणो नवधा भवेत् ॥

अथ अड़ानारागः

रणे प्रविष्टः स्मरचारुमूर्त्तिः
वीरे रसे व्यञ्जितरोमहर्षः ।
पाणौ कृपाणः किल रक्तवर्णः
अड़ानारागः कथितो मुनीन्द्रैः ॥ इति ध्यानम्
पूर्णाड़ाना सुसंप्रोक्ता मध्यमग्रह ईरितः ।
रात्रावथ प्रथमे यामे गीयते विबुधैर्जनैः ॥
मल्लारकानड़ामिश्रनायकी स्वरसंयुता ।
अड़ानोत्पत्तिर्विज्ञेया रात्रौ द्वितीययामके ॥
मपधनिमारेगमगरेसानिमाधनिसा ॥
गमपधनिमागरेमानिधमगरेमा ॥

अथ केदारी ( संगीतदर्पणे २।६५ )—

जटां दधाना सितचन्द्रमौलिः
नागोत्तरीया धृतयोगपट्टा ।
गङ्गाधरध्याननिमग्नचित्ता
केदारिका दीपकरागिणीयम् ॥ इति ध्यानम् ।
मध्यमांशग्रहन्यासं धैवतो वर्ज्जितः क्वचित् ।
अर्द्धरात्रान्तरे गानं केदारो गीयते बुधैः ॥
विहागशङ्कराश्यामहम्मीरो मिश्रितः पुनः ।
केदारो जायते विद्वन् योगध्यानतपस्विना ॥
सामपरेसामागमपरेसानिपमगरेसागरेमानिमपरेसा ॥

अथ मोहनी ।

वीणा दधाना दृढ़बद्धवेणी
सौन्दर्य्यलावण्यकलायताक्षी ।

* प्रचण्डः ।

† स्मरम् प्रविष्ट इति आदर्शपुस्तकधृतपाठः ।

‡ 'कल्याणनाड' इति मुद्रित-संगीतदर्पणपाठः ।

§ केदाररागः कथितो तपस्वी । इति आदर्शपुस्तकधृत-भ्रमपाठः ।

सुवर्णकान्तिर्मधुरस्य गानम्
सा मोहनी मोहितविश्वा एषा ॥ इति ध्यानम् ।
गान्धारांशग्रहन्यासं ऋषभो वर्जितः स्वरः ॥
षाड़वो शेषरात्रौ च मोहनी मोहनी तथा ।
मालकोशी कानड़ा च पर्जकास्वरमिश्रिता ।
मोहनी स्यात्तदुत्पत्तिः निशान्ते गीयते बुधैः ॥
गगममधधनिनिमागगसामधगसानि ॥

अथ पञ्चमः ।

उन्मत्तकोकिलनिनादयुक्तो
वीणा दधानो सुरवेशधारी ।
मदाङ्गमूर्त्तिः सुरपुष्पकर्णः
सुवर्णकान्तिः किल शोभनस्य ॥ * इति ध्यानम् ।
श्यामं ताम्बूलकरं धृतकुमुदं वेणुवाद्यं मताल्लं
चन्द्रार्कौ यस्य भाले पिकमृदुवचनं यस्य आस्ये प्रलिप्तम् ।
देवेन्द्रादियुक्तं शिरसि सुमुकुटं पीतवस्त्रं प्रभाते
गायन्ति स्वर्गलोके दनुजसुरगणाः पञ्चमञ्चात्र सन्तः ॥
ऋषभांशग्रहन्यासं पञ्चमस्वरवर्जितं ।
शेषरात्रौ प्रगीयन्ते पञ्चमो राग उच्यते ॥
रेमपधनिसागमधरेमागरेमानिपमग ॥

अथ मालिगौरा मालवगौड़ । संगीतनारायणे ।

वीणाविनोदप्रतिपन्नपाणिः
गृह्णन् कथा नारदसंप्रयोगात् ।
श्यामो युवा विप्रकुलप्रसूतः
स मालिगौड़ो गौरमुनिप्रणीतः ॥ इति ध्यानम्
धैवतांशग्रहन्यासं मालवी श्री च संयुतम् ।
धनाश्रीमिश्रिता एषा मालिगौरा च कथ्यते ।
धनिसारेगमपधमगरेगमरेसा ॥
निनिधधनिसागरेमानिधपमगरेसा ॥

अथ आभीरराग: ।

हेमप्रभा चारुमनोज्ञमूर्त्तिः
कान्ते समीपे कमनीयकण्ठा ।
धीरोल्लसत्पल्लवकर्णपूरे
षड्जादिसव्योर्पितवस्त्रधारी ॥ इति ध्यानम् ।
गान्धारांशग्रहन्यासं पूर्णा साभीरिका तथा ।
तृतीये सुदिने प्रोक्ता रसे वीरे प्रयुज्यते ॥

अथ जयजयन्ती ।

पीनोन्नता सुन्दरी सा मृगाक्षी
स्वर्णप्रभा कोकिलनादतुल्या ।
वीणाविनोदी सुरपुष्पगन्धी
सा जयजयन्ती सुरमेघस्य भार्या ॥ इति ध्यानम्
सोरठी गौड़संयुक्ता वेलावल्या सुमिश्रिता ।
जयजयन्ती तदोत्पन्ना निशान्ते गीयते बुधैः ॥
षड्जांशग्रहन्यासं क्वचित् धैवत ईरितः ।
सुसम्पूर्णा जयजयन्ती मेघरागस्य वल्लभा ॥
सामारेसामगरेमारेमानिधपमगमधमानिधपमगरे-
रेसामपधसारेसापमरेमागरेमानिधपमगरेमा ॥

अथ भैरवः । संगीतरत्नाकरे वा संगीतरत्नमालायां—

शुभ्राङ्गः शुभ्रवासः शिरसि शशिधरः शृङ्गवाद्यश्च हारे
शम्भोर्वक्त्राब्जजातो धृतगरलगलो भैरवो रक्तनेत्रः ।
हस्ते शूलं कपालं जलजमणिमयं कुण्डलं कर्णयुग्मं
तारं जूटे जटानां शरदि सुरगणैर्गीयते प्रातरेषः ॥
इति ध्यानम्

अथ भैरवी

स्वर्णाभसोमवक्त्रा हिमकरधवलं वस्त्रमुपावहन्ती
कण्ठे रत्नस्य हारं द्विरदवरशिरोजातमुक्ताफलानि ।
सिन्दूरं भालमध्ये प्रहसितवदना हस्तयोः कङ्कणे द्वे
नृत्याङ्गीयमाना चरणकमलयोर्नूपुरौ धारयोध्याम् ॥
इति ध्यानम् ।

अथ पुण्यकी

स्तनतटकृतरागा कुङ्कुमैः पीतवस्त्रा
विविधकुसुमस्रजां कञ्चुकीमादधाति ।

* रक्ताम्बरः रक्तविशालनेत्रः शृङ्गारयुक्तस्तरुणो मनस्वी ।
प्रभातकाले विजयी च नित्यं सदा प्रियः कोकिलमञ्जु भाषी ॥
इति मुद्रित-संगीतदर्पणधृतपाठः ।

भयचकितमृगाक्षी कान्तकण्ठे विलग्ना
जितमृगपतिमध्या पुण्यकी पुण्यदात्री ॥　इति ध्यानम् ।

अथ वङ्गाली

वङ्गाली भाति यस्या अलकपटलकं शीतरश्मिर्नितान्ता
भक्तः सन्ततिहन्ता मलयजरचिता सव्वदहप्रलया ।
गौराङ्गी शुक्लवासा रविसमकिरणा हास्ययुक्ता सुमध्या
युष्माकं संमुदे सा युवजनहृदयानन्दकर्लोकटाक्षैः ॥

तथा च

अन्तर्वासा जयति विमलामक्षमालामसोघां
धत्ते सूत्रं पठति नितरां वेदमत्यन्तविद्वान् ।
शुक्लं वस्त्रं कनकसदृशं पाणिपात्रं कराग्रे
वङ्गालोऽयं वदति वचनं नृत्यगीतावमत्तम् ॥
इति ध्यानम् ।

अथ मधुर-राग:

अत्यन्तरूपी मधुरस्वराङ्गो
गुणान्वित: सम्भृतसर्व्वविद्य: ।
वीरावरैर्वेष्टितगौरदेह:
ख्यातो मधुरो लोकहिते सङ्गि:　इति ध्यानम् ।

इति राग रागिणी ध्यानोदाहरणम

## अथ तालाध्याय:

तकारे शङ्कर: प्रोक्तो लकारे पार्व्वती स्मृता ।
शिवशक्तिसमायोगात्ताल इत्यभिधीयते ॥
शिवशक्त्यात्मकं पुण्यं यशस्यं भुक्तिमुक्तिदम् ।
तत: प्राणात्मकं तालं योगिनामभिलिप्सितम् ॥
( संगीतरत्नाकरे ५।२ )
गीतं वाद्यं तथा नृत्यं यतस्ताले प्रतिष्ठितम् ॥

अथ तालं

अथ तालं प्रवक्ष्यामि लाबरूपं जगद्गुरुम् ।
जनयन्तं सुखं गीते वाद्य-नृत्यविशेषवित् ॥

उत्पत्त्यादित्रयं लोके यतस्तालेन जायते ।
कीटकादिपशूनाञ्च तालेनैव गतिर्भवेत् ॥
यानि कानि च कर्म्माणि लोके तालाश्रितानि च ।
आदित्यादिग्रहाणाञ्च तालेनैव गतिर्भवेत् ॥
ब्रह्मकल्पोऽपि कालेन यत: कालवशं गत: ।
कालक्रियावशाच्छिन्नस्तालशब्दे न मन्यते ॥
हस्तद्वयस्य संयोगे वियोगे चापि वर्त्तते ।
व्याप्तिमानो दशप्राणै: करात्तालकसंज्ञक: ॥
आद्यैकतालो धमालो यति: चाचपुटस्तथा ।
द्वितालो रूपकश्चैव त्रितालश्च द्विधा भवेत् ॥
तेवटो झम्पतालश्च अठतालस्तत: परम् ।
सूर्फाको चर्च्चरी च ब्रह्मचातुर्थतालिका ॥
चतुस्ताल: पञ्चतालो मुख: पञ्च बहुलिका ।
षट्ताल: सप्ततालश्च अष्टमुखी तत:परम् ॥
गणेशतालो नागश्च ब्रह्मतालस्तथैव च ।
रुद्रतालो विष्णुताल: सविता च तत: परम् ॥
करुणा त्रयोदश प्रोक्तश्चतुर्दशस्तथैव च ।
देशी पञ्च षोड्शी च लक्ष्मीतालश्च मल्लिका ॥
सरस्वती पार्व्वती च सावित्री-गायत्री तथा ।
सावित्रीतालविख्यात: कौशिकेन प्रदर्शित: ॥
हनुमद्वीरतालश्च भैरवस्ताल एव च ।
राधिकाताल: कृष्णश्च मोहनी चक्रतालिका ॥
गायन्ती गोपिका चेयं गोपिकाध्यानतत्परा ।
एकैकं कृष्णसन्निधौ वृन्दावने प्रगीयते ॥
गोपिका श्रुतिरूपा च प्रत्येकं तालमिश्रिते ।
इन्द्रादयोऽपि यस्यान्तं न ययुस्तालवारिधे: ॥
रागतानस्वरालाप: वाद्यभेदश्च तालिका ।
न शक्नोतीह केनापि न ययुर्नादवारिधे: ॥
लघ्वादितालो लोकेऽस्मिन् प्रसिद्ध एकतालिका ।
इति एकताली ।

द्रुतार्द्धौ यद्रुतस्यैव धमालताल उच्यते ।
( ( ० ०ं इति धमालताल: :

लघुविरामो यतिताल: ।

इति यतितालौ ।

द्रुतो लघुश्चैव लघुश्चम्पकस्तथा ।

० । इति चम्पकताल: ।

दौलो रूपकतालेऽस्मिन् कथने गायने मति: ॥

० ० । इति रूपकतालौ ।

दौविरामे लघुद्रुतचातुरौताल उच्यते ।

। ० । । इति चातुरौताल: ।

० ० । इति तेवटताल: ।

द्रुताद्रुतौ विरामान्तौ तृतीये ताल: कथ्यते ।

० ० ० इति जलदतिताला ।

लघौ गुरौ च संयुक्ते तृहचितालसंज्ञक: ।

। । ऽ इति धामातिताला ।

द्रुता लघुर्गुरु: प्रोक्तो झम्पतालश्च जायते ।

० । ऽ । । इति झम्पताल: ।

लघुद्रुतो लघुश्चैव सूर्यफाकसुसंज्ञक: ।

। ० । इति सुरफाकूताल: ।

गुरुद्वौ च लघुसंज्ञो चतुर्थतालसंज्ञक: ॥

ऽ ० ० । इति चौताला ।

प्लुतलौ च गुरुर्युक्तौ वृहच्चातुर्थतालक: ।

ऽ । । ऽ इति बड़ाचौताला ।

त्रयो द्रुता लघुरक्तश्चतुरतालसंज्ञक: ।

० ० ० । इति सिधाचौताला ।

लघुर्लघुद्रुतश्चैके लघ्वाद्यठतालसंज्ञक: ।

। ० । इति आड़चौताला ।

लौ द्रौ लघु पुनर्योज्यं पञ्चतालौ विधीयते ।

। । ० ० । इति पञ्चमुखीताल: ।

लघुर्द्रुतो लघुश्चैव द्रुतो लघु: पुनस्तथा ।
पञ्चमंया तालौ प्रोक्ता नादशास्त्रविशारदै: ।

। ० । ० । इति पञ्चमताल: ।

लघुर्द्रुत स्त्रयो युक्ता य: पुनर्लघुषु युज्यते ।
फरताल इमे प्रोक्ता गीतशास्त्रविशारदै: ।

। ० ० ० । इति फरोदस्तताल: ।

लघुद्रुतलघुद्रौ च लघुद्रुश्च प्रदीयते ।
षट्मुखितालसंज्ञा च सङ्गीते परिभाषिता ।

। ० । ० ० । इति षटमुखी ।

लघुचन्द्रो लघुश्चैव द्रुतद्वन्द्वो लघुस्तथा ।
सप्त सुर: तालसंज्ञाश्च सङ्गीते: परिभाषिता: ।

। ( ( ० ० इति सप्तताल: ।

लघुद्रुतो द्रुतश्चैव त्रयद्रुतलघुस्तथा ।
मुख्याष्टताल: विज्ञेय: ख्यातो रागविशारदै: ॥

० । ० । ० । इति अष्टमुखी ताल: ।

द्रुतद्वंद्वलौ चैव चतुराणुलघुस्तथा ।
गणेशतालसंज्ञात: सङ्गीते परिभाषित: ॥

० ० । । ( ( ( ( । इति गणेशताल: ।

लद्रौ लोद्रौ लघुश्चैव ब्रह्मताल: प्रगीयते ।

। ० । ० ० । ० ० ० । इति ब्रह्मताल: ।

गुरुत्रयो लघुद्रुश्च पुनर्लघु: प्रयुज्यते ।
चतुर्द्रुतलघुश्चैव रुद्रताल: प्रगीयते ॥

ऽ ऽ ऽ । ० । ० ० ० ० । इति रुद्रताल: ।

लघुत्रयद्रुतश्चैव चत्वारो द्रुलघुस्तथा ।
विष्णुतालोऽतिविख्यातो सङ्गीते परिभाषित: ॥

। । । ० । । ० ० ० ० ० । इति विष्णुताल: ।

लघुद्रुतलघु श्चव द्रुतद्वन्द्वलघुस्तथा ।
व्यापकौ द्वौ द्रुतौ गुरुसूर्यतालो निगद्यते ॥

। ० । ० ० । ० ० ऽ इति सर्यताल: ।

गुरू द्वौ वै लघुश्चैव त्रयाणुश्च लघुस्तथा ।
द्रुतत्रयलघुश्चैकपश्चाणुलविरामक: ॥
लक्ष्मीताल इति प्रोक्त: सङ्गीते परिभाषित: ॥

ऽ ० ० । ( ( ( । ० ० ० । ( ( ( ( ( । इति लक्ष्मीताल: ।

चत्वार्य्यणुद्रुतश्चैक लघुरेव हि धारयेत् ।
गुरुद्वन्द्वप्लुतश्चैव भ्रमणो तालसंज्ञक: ॥

( ( ( ( ० । ऽ ऽ ऽ इति भ्रमणताल: ।

इति तालाध्याय: ।

## अथ नृत्याध्याय:

श्रीविष्णुसुखसंदोहं गुरुं दीपकरूपकम् ।
सुवृत्तमक्षरं नत्वा वक्ष्ये नृत्यस्य लक्षणम् ॥

नृत्यभेदमाह—

वाद्यं नृत्यं ताण्डवं च नृत्यलास्यमिमाभिधा: ।
लावो हंसो मयूरश्च हय: कुञ्जर एव च ।
तित्तिर: कुक्कुटो मीनो त्वष्टधा गतयो मता: ॥

अथ ताण्डव:

वीरे रसे महोत्साहो पुरुषो यत्र नृत्यति ।
रौद्रभावरसोत्पत्तिस्तत्ताण्डवमिति स्मृतम् ॥

अथ लास्यम्

यौवनस्त्रीविलासिन्य: कामभावविचक्षणा: ।
यदङ्गहारवैदग्धात् कुर्य्युर्लास्यमुदीरितम् ॥

तथाच संगीतरत्नाकरे ( ७।३२ )

लास्यं तु सुकुमाराङ्गं मकरध्वजवर्द्धनम् ॥

( तथा संगीतमहोदधौ ३।६-१५ )—

ईषद्धास्य: प्रसन्नास्यो मुखरागो भवेद्द्विधा ॥
सहजोऽसहजश्चेति प्रसन्न: कान्तिभूषित: ।
स्वाभाविक: प्रसन्नश्च रक्त: स च चतुर्विध: ॥
स्वाभाविक: स्यात् स्वभावा स्वभावेनैव या भवेत् ।
प्रसन्नो मधुर: स स्याच्छृङ्गाराभूतहास्ययो: ॥
रक्त: स्याल्लोहितो वीर: करुणाद्भुतरौद्रयो: ।
गीयमाने ध्रुवपदे गीते ह्यावमनोहरे ॥
नर्त्तनं तनुयात् पात्रं कान्ताहास्यादिदृष्टिजम् ।
नानागतिं लसद्भावो मुखरागादिसंयुत: ॥

सुकुमाराङ्गविन्यासं दन्तद्योतितहावकम् ।
खण्डमानेन रचितं मध्ये मध्ये च कम्पनम् ॥
यत्र नृत्यं भवेदेवं ध्रुवपादं तदा भवेत् ।
प्रायशो मध्यदेशीयो भाषया यत्र धातव: ॥
उद्ग्राहध्रुवकाभोगास्त्रयो भवन्ति हेतव: ।
उद्ग्राहरहितं कंचित् परं त्वाभोगवर्ज्जितम् ॥
उद्ग्राहाभोगरहितमन्वर्थमपरं जगु: ।
स्वरपार्श्वभ्रुविकारा: शृङ्गाराकृतिसूचकम् ।
भस्मादिस्वेदलिप्ताङ्गो विभ्रत्मुण्डशिर:शिखा ॥
भ्राजद्घर्घरिकाजालजङ्घशरीरपेशलम् ।
पञ्चाङ्गकुशलस्तालकलालयविचक्षण: ॥
पञ्चाग्निवोच्चरवाल्यान् यो नृत्यति स धीरधि: ।
वाद्य: प्रबन्धै: कठिनै त्यक्तमेलादिभिस्तथा ॥
गीतैस्तालगतुण्डस्थै: प्रबन्धैश्च ध्रुवादिभि: ।
लास्याङ्गैरन्वितं यत्र नृत्यञ्च द्रुतमानस: ॥
स्वयं गायन्ति वाद्यञ्च त्रिवलीं वादयेत् स्वयम् ।
तत्पात्रं गौड़लोके चेद्वाद्यं तालस्य मन्यते ॥
त्रिवलीं धारणं स्कन्धे ग्राम्यत्वं कुरुते स्त्रिय: ।
अगायत त्वत्कारीरा सैव स्यान्मु खगौण्डली ॥
गौण्डलया मण्डनं प्रोक्तं तद्धि कर्णाटदेशजम् ।
दक्षिणा गायका: सर्व्वं कुशला: गीततत्परा: ॥
मार्गदेशीविभागेन नर्त्तनं द्विविधं स्मृतम् ।
ताण्डव: पुरुषो ज्ञेय: लास्यञ्च स्त्रीविवेरिता ॥

अथ रागनामानि । संगीतरत्नाकरे ( २।१।१६-१८ )—

श्रीरागनट्टौ बङ्गालो भासमध्यमषाड़वौ ।
रक्तहंस: कोल्हहास: प्रसवो भैरवध्वनि: ॥
मेघराग: सोमरागकामोदौ चाम्रपञ्चम: ।
स्यातां कन्दर्पदेशाख्यौ ककुभान्तश्च कैशिक: ॥
नट्टनारायणश्चेति रागा विंशतिरीरिता: ।

( तत्र व २।१।३६-३१

छेवाटी पिञ्जरीत्येका बोट्टे भाषा तु माङ्गली ।
बाङ्गालो माङ्गली हर्षपुरी मालववेसरी ॥
खञ्जनी गुर्ज्जरी गौड़ी पौराली चार्धवेसरी ।

शुद्धा मालवरूपा च सैन्धव्याभीरिकेत्यमूः ॥
भाषास्त्रयोदश ज्ञेया विभाषे मालवकैशिके ।
विभाषे द्वे तु काम्बोजी तद्वद्देवारवर्धनी ॥
गान्धारपञ्चमे भाषा गान्धारी भिन्नषड्जका ।
देवगान्धारः*कच्छेल्ली स्वरवल्ली निषादिनी ॥
त्रिवणा† मध्यमा शुद्धा दाक्षिणात्या पुलिन्दका
तुम्बुरा षड्जभाषा च कालिन्दी ललिता ततः ॥

तथा च संगीतदर्पणे रागविवेकाध्याये ( २।१-५ )—

योऽयं ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां स रागः कथितो बुधैः ॥

अथ रागाङ्गम्

रागच्छायानुकारित्वाद्रागाङ्गमिति कथ्यते ।

इति रागाङ्गम्

अथ क्रियाङ्गम्

करुणोत्साहसंयुक्तं क्रियाङ्गं तेन हेतुना ।

इति क्रियाङ्गम् ।

अथ भाषाङ्गम्

भाषाच्छायाश्रिता येन भाषाङ्गं तेन हेतुना ॥

इति भाषाङ्गम्

अथोपाङ्गम्

किञ्चित् छायानुकारित्वादुपाङ्गमिति कथ्यते ।

इत्युपाङ्गम् ।

अथ काकारणा

काकारणा तु कथिता तारस्थानेषु शीघ्रता ।
गमकैर्विविधैर्युक्ता कौशलेन विभूषिता ॥

इति काकारणा ।

अथ मतङ्गमतेन रागाणां त्रैविध्यं दर्शयति —

शुद्धाश्छायालगाः प्रोक्ताः संकीर्णाश्च तथैव च ॥
तत्र शुद्धरागत्वं नाम शास्त्रोक्तनियमाद्रञ्जकत्वं भवति।

छायालगरागत्वं नामान्यच्छायालगत्वेन रक्तिहेतुत्वं भवति। सङ्कीर्णरागत्वं नाम शुद्धच्छायालगमुख्यत्वेन रक्तिहेतुत्वं भवति।

इति कल्लिनाथोक्तं लिखितं ।

( तथा च संगीतदर्पणे २।८-११ )—

शिवशक्तिसमायोगाद्रागाणां सम्भवो भवेत् ।
पञ्चास्यात् पञ्च रागाः स्युः षष्ठस्तु गिरिजामुखात् ॥
सद्योवक्त्रात्तु श्रीरागो वामदेवात् वसन्तकः ।
अघोराद्भैरवोऽभूत् तत्पुरुषात् पञ्चमोऽभवत् ॥
ईशानाख्यान्मेघरागो नाट्यारम्भे शिवादभूत् ।
गिरिजाया मुखाल्लास्ये नट्टनारायणोऽभवत् ॥

इति संगीतदर्पणोक्तम् ।

( तथा च संगीतरत्नाकरे २।१।३८-४५ )—

श्रीकण्ठिका च बङ्गाली गान्धारी सैन्धवीत्यमूः ।
भाषाः सप्तदश ज्ञेयास्तत्रस्तु विभाषिकाः ॥
पौराली मालवा कालिन्द्यपि देवारवर्धनी ।
वेसरे षाड्वे भाषे द्वे वाह्या वाह्यषाड्वा ॥
विभाषे पार्वती श्रीकण्ठ्यथ मालवपञ्चमे ।
भाषास्तिस्रो वेदवती भाविनी च विभाविनी ॥
ताने तानोद्भवा भाषा भाषा पञ्चमषाड्वे ।
पोता भाषांशकामेकं रेवगुप्ते विदुर्विदुः ॥
विभाषा पल्लवी भासवलिता किरणावली ।
शकाद्यावलितत्येतास्तिस्रस्त्वन्तरभाषिकाः ॥
चतस्रोऽनुक्तजनका ह्रद्देश्यामिमाः स्मृताः ।
एवं षण्णवतिभाषा विभाषा विंशतिः स्मृताः ॥
चतस्रोऽन्तरभाषाः स्युः शार्ङ्गदेवस्य सम्मताः ।
भाषा मुख्या स्वराख्या च देशाख्या चोपरागजा ।
चतुर्विधा मतङ्गोक्ता मुख्यानन्योपजीविनी ।
स्वरदेशाख्यया ख्याता स्वराख्या देशजा क्रमात् ।
अन्योपरागजाताभ्यो याष्टिकेनोदिता: पुनः ।
संकीर्णदेशजामूलाछायामात्रेतिनामभिः

* 'गान्धारवल्ली' इति मुद्रितसंगीतरत्नाकरपाठः ।

† 'त्रवणा' इति मुद्रितरत्नाकरपाठः ।

‡ पञ्चम षाड्वी मता । इति आदर्शपुस्तकपाठः ।

शुद्धाभीरी रगन्ती च त्रिधा मालववेसरी ।
मुख्याः षडिति शेषास्तु सुज्ञाताः स्फुटलक्षणाः
नामसाम्यंतु कासाञ्चिच्छिन्नानामपि लक्ष्मतः ॥

इति ग्रामरागोपरागभाषाविभाषान्तरभाषाविवेकः ।

### अथ रागभाषाविभाषा-लक्षणं

( संगीतरत्नाकरे २।२।१——४ )

अथ रागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गनिर्णयम् ।
केषाञ्चिन्मतमाश्रित्य कुरुते सोढलात्मजः ॥
रञ्जनाद्रागता भाषा रागाङ्गादेरपीष्यते ।
देशीरागतया प्रोक्तं रागाङ्गादिचतुष्टयम् ॥
प्रसिद्धा ग्रामरागाद्याः केचिद्देशीत्यपीरिताः ।
तत्र पूर्वप्रसिद्धानामुद्देशः क्रियतेऽधुना ॥
शङ्कराभरणो घण्टारव आहंसदीपकौ ।
रीतिः पूर्णाटिका लाटी पल्लवीति बभाषिरे ॥
रागाङ्गान्यष्टगाम्भीरी वेहारी श्रीकोत्पली ।
गोली नाटान्तरी नीलोत्पली छायातरङ्गिणी ॥
गान्धारगतिका रञ्जावित्येकादश मेनिरे ।
भाषाङ्गान्यथ भावक्रीस्वभावक्रीशिवक्रियः ॥
मकरक्रीविनितक्रीकुमुदक्रीदनुक्रियः ।
ओजक्रीन्द्रक्रियो नागकृतिधन्यकृतिस्तथा ॥
विपायक्री क्रियाङ्गानि द्वादशेति जगुर्बुधाः ।
त्रिण्युपाङ्गानि पूर्णाटो देवालश गुरुञ्जिका ॥
चतुस्त्रिंशदिमे रागाः प्राक्प्रसिद्धाः प्रकीर्त्तिताः

संगीतभाष्ये मदङ्गाध्याये —

गीतवादनतत्त्वज्ञश्छिद्राच्छादनपण्डितः ।
ग्रहमोक्षप्रदोषज्ञो गीतनृत्यप्रमाणवित् ॥
न वाद्येन विना यस्माद्गीतं तालं च शोभते ।
तस्मात्साङ्गलक्ष्यमस्माभिर्वाद्यमत्र निगद्यते ॥
गीतं निरूपितं तच्च वाद्याधीनं मतं मया ।
वाद्यं निरूप्यते गीतं नृत्ययोरनुरञ्जकम् ॥
चतुर्व्विधं तत् कथितं ततं सुषिरमेव च ।
अवनद्धं घनं चेति ततस्तत्त्रिगतं भवेत् ॥



सङ्गीतरत्नाकरे ( संगीतनारायणे )—

ततानद्धं सुषिरञ्च घनानीति चतुर्व्विधः ।
ततं वीणादिकं वाद्यमानद्धमुरजादिकम् ।
वंशादिकन्तु सुषिरं कांस्यतालादिकं घनम् ॥

सङ्गीतदर्पणे—

वीणादिसुषिरं वंशं कोहलादिप्रकीर्त्तितः ।
चर्म्मणानद्धवदनं वाद्यते पटहादिकम् ॥
अवनद्धं घनं प्रोक्तं कांस्यतालादिकं घनम् ।
आलावनी ब्रह्मवीणा किन्नरीति निगद्यते ॥
विपञ्ची वल्लकी ज्येष्ठा चित्रा घोषवती जया ।
हस्तिका कुब्जिका कूर्म्मी सारङ्गी परिवादिनी ॥
त्रिशरी शततन्त्री च नकुलोष्ठी च वंसरी ।
औडुंबरी पिनाकी च निबन्धपुष्कलस्तथा ।

संगीतरत्नाकरे—

वीणा घोषवती चित्रा विपञ्ची परिवादिनी ।
वल्लकी कुब्जिका ज्येष्ठा नकुलोष्ठी च किन्नरी ॥
जया कूर्मी पिनाकी च हस्तिका शततन्त्रिका ।
औटम्बरी च षट्कर्णा पीनो रावणहस्तकः ॥
सारङ्गयालापिनीत्यादिः कुतपास्ततवादकाः ।
महाराष्ट्रान्ध्रकर्म्मीरचौलैर्म्मलयमालवैः ॥
अङ्गवङ्गकलिङ्गाद्यैर्नानाभिनयकोविदैः ।
अङ्गहारप्रयोगज्ञैर्लास्यताण्डवकोविदैः ॥
विचित्रस्थनिकप्रौढैर्विषमेषु सुशिक्षितैः ।
नादस्य कुतपं पात्रैरुत्तमाधममध्यमैः ॥
कुतपानाममीषान्तु समूहो वृन्दमुच्यते ।
ततानद्धं सुषिरञ्च घनानीति चतुर्विधम् ॥
ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् ।
वंशादिकन्तु सुषिरं कांस्यतालादिकं घनम् ॥

## अथ वाद्याध्यायः

अथ मृदङ्गवाद्याक्षराणि

ताधीथुना तथा धीधी टेकिटिगिदिगनधा ।
तकाधीधीथुं थुं नानाधिररधिररधिलाङ्गधा ॥

कवर्ग क ख ग घ ङा चवर्ग ज झ ञ पुनः।
टवर्गे ट ठ ड ढ णा तवर्गे त थ द ध्न च॥
पवर्गे मस्य संप्रोक्ता अन्तस्था य-र-ल-स्तथा।
एवं वाद्याक्षरा ग्राह्या मृदङ्गाध्याय ईरिताः॥

अथ पर्णसागरमृदङ्गाध्यायः। संगीतरत्नाकरे—

ताधिथुन्नाटेक्किदिधा ता तत्तिथुन्ना तत्तधिधिथुन्थुन्न थुन्नन्नाटेताकिटतकघेदिगनधातकिटधाथुंकिटितातकिट किटतकाधिकिटिकिटितकाथु किटिकिटितकानंकिटि किटितकतकिटिकिटिधुमकिटितकघेदिगिनधा॥ १॥

तकिटिकिटिथुन्थुन्किटितकथुन्थुन्किटतकदि-किटिकिटिथुन्थुन्किटिथुन्थकिटतकथुन्किटिकिटि थुन्थुन्किटथुन्थुन्किटतकनकिटिकिटिथुन्थुन्किट थुन्थन्किटतकाकिटकिटधुमकिटतकगेदिगन्धा॥ २।

तकिटिकिटिधुमकिटिधुमकिटितकदिकिटिकिट धुमकिटिधुमकिटितकथुन्किटिकिटधुमकिटिधुम किटितकमंकिट्किटधुमकिटिधुमकिटितकतकिट किटधमकिटतकगेदिगन्धा॥ ३॥

तकिट्तकिट्थुन्थुन्किटधुम्किटतकदिकिटदि किटथुन्थुन्किटधुम्किटतक्नकिटिकिटिथुन्थुन्किट धुमकिटतकतकिटकिटधुमकतकगेदिगनधा॥ ४॥

तकिटकिटतकतकिटथन्किटतकदिकिटदिकिट तकतकिटथुन्नाकटतकाथुन्किटथुन्किटतकताकट थुन्किटतकनकिटकिटतकतकिटथुन्किटततकिट तकधुमकिटतकघेदिघिन्नधा॥ ५॥

तकिटतकिटतकतकिटधिकिटतकादिकिटदिकिट तकतकिटधिकिटतक्थुन्किटकिटतकत्किटधिकिट तकनकिटकिटतकतकिटधिकिटतकतकिटकिटधुम किटतकघेदिगन्धा॥ ६॥

तकिटतकिटधुम्किटतकिटतकाकिटतकदिकिटि किटधुमकिटितकिटतकाकिटतकथुन्किटिकिटिधुम किटततकाकिटतकनंकिटिकिटधुमकिटत२किटत किटतकतकिट२धुमकिटतकाघेदिगन्धा॥ ७॥

तकिटितकिटितकतकाधुमकिटितकादिकिटिकिटि तकतकाधुमकिटितकथुन्किटकिटतकतकधुमकिटि तका। नंकिटिनंकिटितकातकधुमकिटतकतकिटि किटधुमकिटतकघेदिगन्धा॥ ८॥

तकिटितकिटिधाकिटतधाकिटतकाकिटतकदिकिट दिकिटधाकिटतकधाकिटतकाकिटतकथुन्किटिकिटि धाकिटतकिटतकाकिटतकधाकिटनंकिटधाकिटतधाकिट तकाकिटतकतकिटकिटधुमकिटतकघेदिगन्धा॥ ९॥

तकिटतकिटतकिटतकाकिटतकदिकिटदिकिट तकिटतकाकिटतकथुन्किटकिटतकिटतकाकिटतक् नंकिटनंकिटकिटतकाकिटतकतकिटिकिटिधुमकिटि तकगिदिगन्धा॥ १०॥

ताकिटताकिटतकिटतकाकिटततकाकिटतकाकिट तकाकिटतकादिकिटकादिकिटतकिटतकाकिटतकिट तककिटतकाकिटतकाकिटिनकथुन्किटकिटतकिट तकाकिटतकानंकिटनंकिटतकिटतकिटतकिटतकतकिट तकतकिटधुमकिटतकगिदिगन्धा॥ ११॥

ताधिन्नकधिधिधिन्नकगिदिगिनक तत्तत्तोततताततत धिधिथुन्थुन्नन्नाकिटतकघेदिगघनकिटतकघेदिन्न दिदितोदिदितानत्धिधिथुन्थुन्ननाकिटतकघेदिगन किटतकघेदिघनदिदितोदिदितातत्धिधिथुन्थुन्नन्ना किटतकघेदिगनकिटतकघेदिघनथुन्थुनताथुन्थुनता ततधिधिथुन्थुनंनाकिटतकघेदिघनाकटितकघेदि घननन्नंताननंन्नाततधिधिथुन्थुनंनाकिटतकगिदिघन किटतकगिदिघन्धा॥ १२॥

त्रिकटतकताधागेतिटिधागेदिगन्नागेकिटिकिडन कत्रकडनानधोधागिदिगनन्नगदित्कडांनधात्रिकडक्कि धकडानधातिकडधाताधाधितानधाधाधिनगदितकडां नधातकगिदिगन्धा॥ १३॥

तांत्रकिटभ्रकिटथुन्गिताथारिक्कुतकिटतकाकिटभ्र गड्धागेदिगिन्नंकिटत्रकटतागेदिगिन्नतात्रिकटतागेदिता भ्रगड्धागेदितानंकिटथुन्किटधाधाकिटधुमकिटधा ताड्धाधाधोधाताड्धाधाधोधाताड्धाधाधोधा॥ १४॥

कड़ांनकिटतक्धागेदिगिन्नागेतिटिकिडनक्त्रिकट
तागेदिगिताघड़ांनघिड़्नक्ध्रकटतक्तागेतिटिकिटि
नांकिटिथुन्किटिधगड़धागेदिटिकिटिकड़ांन्घड़ान्धुम
किटतकिटतक्काकिटध्रगड़तागेदिगिताधाताड़धाधाधी
धाधीधाधुमकिटत्वकटतकतागिदिगनधा ॥ १५ ॥

धातागथुन्गाधागेदिगिताधाताकिटतक्धुमकिट
नंकिटघड़ांनक्रड़ांक्रिड़नक्धुमकिटत२किटिकिटतक्
ध्रगड़तक्त्रगड़धागेदिगिन्नतान्ध्रांत्रकटत्वकटनंकिट
नंकिटतकतक्काकिटधुमकिटधाताड़धाधाधीधाधीता
किटतक्थुन्किटथुन्किटतक्धुमकिटत्वकड़तकतातक
धुमकिटितकगिदिगन्नगदिधातकघढ़ांन्घेदिगन्ननगदि
धात्तकधुमकिटगेदिगनधा ॥ १६ ॥

( तथाच संगीतरत्नाकरे ५।२३७ )

द्रुतादिरचनाभेदात्तालभेदोऽप्यनेकधा ।
तालानामधुना तेषामुद्देशं संगिरामहे ॥
अणुद्रुतो द्रुतश्चेति विरामद्रुतलस्तथा ।
द्रुविरामौ गुरुश्चेति प्लुतश्चेति यथाक्रमम् ॥
अर्द्धचन्द्राकारस्यादनु इत्यभिधीयते ।
चन्द्रद्रुतं तथा ज्ञेयं द्रुतं चैव द्विविन्दुका ।

। । ऽ ऽ

समाङ्गानि सुतालेऽस्मिन् ज्ञातव्यानि सदा बुधैः ॥
अणुद्रुतो वातजातो द्रुतश्च जलसम्भवः ।
समीर-जलसम्भूतो द्वविरामोऽह कथ्यते ॥
लघुरग्निभवः प्रोक्तः सविरामजलाग्निना ।
गुरुराकाशसम्भूतः प्लुतो धरणीसम्भवः ॥
अणुद्रुते चन्द्रदेवो द्रुते शम्भुर्विधीयते ।
द्वविरामे कुमारः स्याल्लघो देवी स्मृता बुधैः ॥
लविरामे स्मृतो जीवो गुरौ गौरीयुतः शिवः ।
दीप्ते त्रयो विरिञ्चाद्या देवता मुनिभिः स्मृताः ॥
तित्तिरश्चटकश्चैव वकश्चाषश्च कोकिलः ।
वायसः कुक्कुटश्चैव क्रमादुच्चारयत्यमी ॥

अथ ताननामानि

चटपटपुटचाचपट्पितापुत्रसंज्ञकाः ।
सम्पकेंष्टा पुनर्ज्ञेया उदघटो मार्गतालिकाः ॥

( संगीतरत्नाकरे ५।२३८—२५२ )

आदितालो द्वितीयश्च तृतीयोऽथ चतुर्थकः ।
पञ्चमो निःशङ्कलीलो दर्पणः सिंहविक्रमः ॥
रतिलीलः सिंहलीलः कन्दर्पो वीरविक्रमः ।
रङ्गः श्रीरङ्गचच्चर्यौ प्रत्यङ्गो यतिलग्नकः ॥
गजलीलो हंसलीलो वर्णभिन्नस्त्रिभिन्नकः ।
( राजचूड़ामणी रङ्गो द्योतो रङ्गप्रदीपकः ॥ )
राजतालो वर्णतालः सिंहविक्रीड़ितो जयः ॥
वनमाली हंसनादः सिंहनादश्च कुक्कुटः ।
तुरङ्गलीलः शरभलीलः स्यात् सिंहनन्दनः ।
त्रिभङ्गिरङ्गाभरणो मण्ठकः कोकिलाप्रियः ॥
निःसारुको राजविद्याधरश्च जमङ्गलः ।
मल्लिकामोदविजयानन्दौ क्रीड़ाजयश्रियौ ॥
मकरन्दः कीर्त्तितालः श्रीकीर्त्तिः प्रतिपालकः ।
विजयो विन्दुमाली च समनन्दनमण्ठिकाः ॥
( दीपको दक्षिणो ढेङ्की विषमो वर्णमण्ठिका ।
अभिनन्दोऽनङ्गनान्दो मल्लकङ्कालकन्दुकाः ॥ )
एकतालो च कुमुदश्चतुस्तालो च डोम्वली ।
अभङ्गो रायवङ्कोलो वसन्तो लघुशेखरः ॥
प्रतापशेखरो झम्पा गजझम्पश्चतुर्मुखः ।
मदनः प्रतिमण्ठश्च पार्व्वतीलोचनो रतिः ॥
लीलाकरणयत्याख्यौ ललितो गारुड़िस्तथा ।
राजनारायणाख्यश्च लक्ष्मीशो ललितप्रियः ॥
श्रीनन्दनश्च जनको वर्द्धनो रागवर्द्धनः ॥
षट्तालश्चान्तरक्रीड़ा हंसोत्सवविलोकिताः ॥
गजो वर्णयति सिंहः करणः सारसस्तथा ॥
चण्डतालश्चन्द्रकलालयस्कन्दाद्दुतालिकाः ॥
धत्ता द्वन्द्वमुकुन्दौ च कुविन्दश्च कलध्वनिः ॥
गौरी सरस्वती कण्ठाभरणो भग्नसंज्ञकः ।
तालो राजमृगाङ्कश्च राजमार्त्तण्डसंज्ञकः ॥

